ओ३म्

गुरुकुल ग्रन्थावलिः ।


# धातुपाठः


अधस्तात्
तत्तद्धातूपयोगिसूत्रावल्याऽनुगृहीतो
धातुसूच्या बृंहितश्च ।
अप्रसिद्धधात्वर्थनिर्देशपुरस्सरं
संशोधितः ।

स च
जालन्धरीय
सद्धर्मप्रचारक यन्त्रालये
पं० अनन्तरामशर्म प्रबन्धेन
मुद्रितः

सं० १९६३ वि०

प्रथमवारम् १००० } अस्य पुनर्मुद्रणाद्यधिकारः स्वायत्तः { मूल्यम् ।) डाकव्ययः )॥




# * विषयसूचीपत्रम् ॥ *

# * शुद्धिपत्रम् *

| | अशु० | शु० | पृ० | पं० |
|---|---|---|---|---|
| १ | लाक्षि | लाछि | ६ | १३ |
| २ | ाणस | णिश | १३ | ६ |
| ३ | पुञ् | पूञ् | ३८ | १ |
| ४ | लुञ् | लूञ् | ३८ | १ |




* ओ३म् *

# अथ पाणिनिकृतधातुपाठाऽऽरम्भः ॥

## (१) भू, सत्तायाम् । उदात्तः परस्मैभाषः ॥

[ १ ] लटि–भूवादयो धातवः । १ । ३ । १ । धातोः । ३ । १ । ९१ ।
वर्तमाने लट् । ३ । २ । १२३ । लः कर्मणि च भावे चाकर्मकेभ्यः । ३।४।६९।
लस्य । ३ । ४ । ७७ । तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ।
३ । ४ । ७८ । लः परस्मैपदम् । १ । ४ । ९९ । तङानावात्मनेपदम् । १ ।४ ।
१०० । शेषात्कर्त्तरि परस्मैपदम् । १ । ३ । ७८ । तिङस्त्रीणि त्रीणि प्रथममध्यमो-
त्तमाः ।१ । ४ । १०१ । तान्येकवचनद्विवचनबहुवचनान्येकशः । १ । ४ । १०२।
युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ । अस्मद्युत्तमः ।
१ । ४ । १०७ । शेषे प्रथमः । १ । ४ । १०८ । द्व्येकयोर्द्विवचनैकवचने । १ ।
४ । २२ । बहुषु बहुवचनम् । १ । ४ । २१ । तिङ्शित्सार्वधातुकम् ।३।४।११३।
कर्त्तरि शप् । ३। १ । ६८ । हलन्त्यम् । १ । ३ । ३ । लशक्वतद्धिते । १ । ३ ।
८ । तस्य लोपः । १ । ३ । ९ । यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् । १ । ४ ।
१३ । सार्वधातुकार्धधातुकयोः । ७ । ३ । ८४ । एचोऽयवायावः । ६ । १ । ७८।
विभक्तिश्च । १ । ४ । १०४ । न विभक्तौ तुस्माः । १ । ३ । ४ । सुप्तिङन्तं
पदम् । १ । ४ । १४ । ससजुषोरुः । ८ । २ । ६६। उपदेशेऽजनुनासिकइत् । १ ।
३ । २ । विरामोऽवसानम् । १ । ४ । ११० । खरवसानयोर्विसर्जनीयः । ८ ।
३ । १५ । झोऽन्तः । ७ । १ । ३ । अतो गुणे । ६ । १ । ९७ । अतो दीर्घो-
यञि । ७ । ३ । १०१ । लिटि–परोक्षे लिट् । ३ । २ । ११५ । लिट् च । ३ ।
४ । ११५ । परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । ३ । ४ । ८२ । चुटू । १ । ३ ।
७ । भुवो वुग्लुङ्लिटोः । ६ । ४ । ८८ । एकाचोद्विप्रथमस्य । ६ । १ । १ । अजा-

( १ ) आत्मधारणानुकूलो व्यापारःसत्ता । फलंव्यापारश्चेत्युभयं धात्वर्थ इति सर्वत्र
बोध्यम् ।

द्वितीयस्य । ६ । १ । २ । लिटिधातोरनभ्यासस्य । ६ । १ । ८ । पूर्वोऽभ्यासः। ६ । १ । ४ । हलादिःशेषः । ७ । ४ । ६० । ह्रस्वः । ७ । ४ । ५९ । भवतेरः । ७ । ४ । ७३ । अभ्यासे चर्च । ८ । ४ । ५४ । वा०—वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ । ६ । ४ । २२ । आर्द्धधातुकस्येड्वलादेः । ७ । २ । ३५ । **लुटि**—अनद्यतनेलुट् । ३ । ३ । १५ । स्यतासी लृलुटोः । ३ । १ । ३३ । आर्द्धधातुकं शेषः। ३ । ४ । ११४ । लुटः प्रथमस्य डारौरसः । २ । ४ । ८५ । टेः । ६ । ४ । १४३ । दीधीवेवीटाम् । २ । १ । ६ । रिच्चि । ७ । ४ । ५१ । तासस्त्योर्लोपः । ७ । ४ । ५० । **लृटि**—लृट्शेषे च । ३ । ३ । १३ । आदेशप्रत्यययोः । ८ । ३ । ५९ । **लेटि**—सिब्बहुलंलेटि । ३ । १ । ३४ । वा०—सिब्बहुलंणित् । अचोञ्णिति । ७ । २ । ११५ । लेटोऽडाटौ । ३ । ४ । ९४ । इतश्च लोपः परस्मैपदेषु । ३ । ४ । ९७ । संयोगान्तस्य लोपः । ८ । २ । २३ । स उत्तमस्य । ३ । ४ । ९८ । **लोटि**—लोट् च । ३ । ३ । १६२ । आशिषि लिङ्लोटौ । ३ । ३ । १७३ । एरुः । ३ । ४ । ८६ । तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । ७ । १ । ३५ । लोटो लङ्वत् । ३ । ४ । ८५ । तस्थस्थमिपां तान्तन्तामः । ३ । ४ । १०१ । सेर्ह्यपिच्च । ३ । ४ । ८७ । अतो हेः । ६ । ४ । १०५ । मेर्निः ३ । ४ । ८९ । आडुत्तमस्यपिच्च । ३ । ४ । ९२ । नित्यं ङितः । ३ । ४ । ९९ । **लङि**—अनद्यतने लङ् । ३ । २ । १११ । लुङ्-लङ्लृङ्क्ष्वडुदात्तः । ६ । ४ । ७१ । इतश्च । ३ । ४ । १०० । **विध्यादिलिङि**—विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषुलिङ् । ३ । ३ । १६१ । यासुट् परस्मैपदेषूदात्तो ङिच्च । ३ । ४ । १०३ । सुट्तिथोः । ३ । ४ । १०७ । लिङःसलोपोऽनन्त्यस्य । ७ । २ । ७९ । अतो येयः । ७ । २ । ८० । आद्गुणः । ६ । १ । ८७ । लोपो व्योर्वलि । ६ । १ । ६६ । झेर्जुस् । ३ । ४ । १०८ । **आशिषिलिङि**—लिङाशिषि । ३ । ४ । ११६ । किदाशिषि । ३ । ४ । १०४ । क्ङिति च । १ । १ । ५ । **लुङि**—लुङ् । ३ । २ । ११० । माङि लुङ् । ३ । ३ । १७५ । स्मोत्तरे लङ् च । ३ । ३ । १७६ । च्लि लुङि । ३ । १ । ४३ । च्लेःसिच् । ३ । १ । ४४ । गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । । २ । ४ । ७७ । भूसुवोस्तिङि । ७ । ३ । ८८ । न माङ्योगे । ६ । ४ । ७४ । **लृङि**—लिङ्निमित्ते लृङ् क्रियातिपत्तौ । ३ । ३ । १३९ । ते प्राग्धातोः । १ । ४ । ८० । आनिलोट् । ८ । ४ । १६ । वा०—दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधः । अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वक्तव्यम् । शेषविभाषाऽकखादावषान्तउपदेशे । ८ । ४ । १८ ।

अथ तवर्गीयान्ता एधादयः कथ्यन्ताः षट्त्रिंशदात्मनेभाषाः ॥

**(१) एध,वृद्धौ । (२) स्पर्द्ध, सङ्घर्षे । गाधृ,प्रतिष्ठालिप्सयोर्ग्रन्थे च । बाधृ,विलोडने । (३) नाथृ, नाधृ, याच्ञोपतापैश्वर्याऽऽशीःषु । (४) दध,धारणे । (५) स्कुदि, आप्रवणे । श्विदि, श्वैत्ये । वदि, अभिवादनस्तुत्योः । भदि, कल्याणे सुखे च । मदि, स्तुतिमोदमदस्वप्नकान्तिगतिषु । स्पदि, किञ्चिच्चलने । क्लिदि, परिदेवने । मुद, हर्षे [६] दद,दाने । (७) ष्वद स्वर्द, आस्वादने (८) उर्द, माने क्रीडायाञ्च । कुर्द, खुर्द,**

(१) टिति—टित आत्मनेपदानां टेरे । ३ । ४ । ७९ । सार्वधातुकमपित् । १ । २ । ४ । आतो ङितः । ७ । २ । ८१ । थासस्से । ३ । ४ । ८० । **लिटि**—इजादेश्च गुरुमतोऽनृच्छः । ३ । १ । ३६ । आमः । २ । ४ । ८१ । कृञ्चानुप्रयुज्यते लिटि । ३ । १ । ४० । आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १ । ३ । ६३ । लिटस्तझयोरेशिरेच् । ३ । ४ । ८१ । असंयोगाल्लिट्कित् । १ । २ । ५ । द्विर्वचनेऽचि । १ । १ । ५९ । उरत् । ७ । ४ । ६६ । कुहोश्चुः । ७ । ४ । ६२ । कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि । ७ । २ । १३ । इणः षीध्वंलुङ्लिटां धोऽङ्गात् । ८ । ३ । ७८ । अतआदेः । ७ । ४ । ७० । **लुटि**—धि च । ८ । २ । २५ । हएति । ७ । ४ । ५२ । **लेटि**—वैतोऽन्यत्र । ३ । ४ । ९६ । आतऐ । ३ । ४ । ९५ । **लोटि**—आमेतः । ३ । ४ । ९० । सवाभ्यां वामौ । ३ । ४ । ९१ । एतऐ । ३ । ४ । ९३ । **लङि**—आडजादीनाम् । ६ । ४ । ७२ । आटश्च । ६ । १ । ९० । **वि० लिङि**—लिङःसीयुट् । ३ । ४ । १०२ । झस्य रन् । ३ । ४ । १०५ । इटोऽत् । ३ । ४ । १०६ । **लुङि**—आत्मनेपदेष्वनतः । ७ । १ । ५ । (२) **लिटि**—शर्पूर्वाः खयः । ७ । ४ । ६१ । (३) वा०—आशिषिनाथः । १ । ३ । २१ । (४) अतएकहल्मध्येऽनादेशादेर्लिटि । ६ । ४ । १२० । (५) इदितोनुम्धातोः । ७ । १ । ५८ । मिदचोऽन्त्यात्परः । १ । १ । ४७ । (६) न शसददवादिगुणानाम् । ६ । ४ । १२६ । (७) धात्वादेःषःसः । ६ । १ । ६४ । (८) उपधायांच । ८ । २ । ७८ ।

(१) सङ्घर्षः पराभिभवेच्छा । (२) उपतापोरोगः । (३) आप्रवणमुत्प्लवनमुत्प्लुत्य गमनं वा । (४) कल्याणं मङ्गलं सुखमात्मगुणः (५) मोदो हर्षः । मदो गर्वः । स्वप्न आलस्यम् । (६) चलनं कम्पनम् । (७) परिदेवनं शोचनम् । (८) किञ्चिदुद्दिश्यापुनर्ग्रहणाय स्वीयत्यागो दानम् । (९) आस्वादनमनुभवः ।

गुर्द, गुद, क्रीडायामेव । षूद, क्षरणे । ह्राद, अव्यक्ते शब्दे । ह्लादी सुखे च । स्वाद, आस्वादने । पर्द कुत्सिते शब्दे । यती, प्रयत्ने । युतृ, जुतृ, भासने । विथृ, वेथृ, याचने । श्रथि, शैथिल्ये । ग्रथि, कौटिल्ये । कत्थ, श्लाघायाम् । इत्युदात्ता अनुदात्तेतः ॥

अथाऽतादयः शुन्ध्यन्ता अष्टात्रिंशत्परस्मैभाषाः ॥

(१)-अत, सातत्यगमने । चिति, संज्ञाने । (२) च्युतिर्, आसेचने । श्च्युतिर्, क्षरणे । (३) मन्थ, विलोडने । कुथि, पुथि, लुथि, मथि, हिंसासंक्लेशनयोः । [४] षिध, गत्याम् (५) षिधू, शास्त्रे माङ्गल्ये च । खाद, भक्षणे । (६) खद, स्थैर्ये हिंसायाञ्च । [७] बद, स्थैर्ये । (८) गद, व्यक्तायां वाचि । रद, विलेखने । [९] णद, अव्यक्ते शब्दे । [१०] अर्द, गतौ याचने च । नर्द, गर्द, शब्दे । तर्द, हिंसायाम् । कर्द, कुत्सिते शब्दे । खर्द दन्दशूके । अति, अदि, बन्धने ।

---

[ १ ] लुङि-इटईटि । ८ । २ । २८ । नेटि । ७ । २ । ४ । [ २ ] लुङि-इरितो वा । ३ । १ । ५७ । [३] आशिषिलिङि-अनिदितां हलउपधायाःक्ङिति । ६ । ४ । २४ । [ ४ ] लङादौ-उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ८ । ३ । ६५ । स्थादिष्वभ्यासेन चाभ्यासस्य । ८ । ३ । ६४ । [ ५ ] लिटयादौ—स्वरतिसूतिसूयतिधूञूदितोवा । ७ । २ । ४४ । झषस्तथोर्धोऽधः । ८ । २ । ४० । झलांजशझशि । ८ । ४ । ५३ । खरि च । ८ । ४ । ५५ । लुङि—झलोझलि । ८ । २ । २६ । ( ६ ) लिटि—अतउपधायाः । ७ । २ । ११६ । णलुत्तमो वा । ७ । १ । ९१ । लुङि—अतोहलादेर्लघोः । ७ । २ । ७ । (७) लिटि—थलि च सेटि । ६ । ४ । १२१ । ( ८ ) नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिपुच । ८ । ४ । १७ । ( ९ ) णो नः । ६ । १ । ६५ । उपसर्गादसमासेऽपि णोपदेशस्य । ८ । ४ । १४ । इष्टिःअनर्दनाटिनाथ्नाधनन्दनक्कनॄनृतो णोपदेशाः । ( १० ) तस्मान्नुड्द्विहलः । ७ । ४ । ७१ ।

---

( १ ) क्षरणं निःसारणम् ( २ ) अव्यक्तशब्दो वाद्यादिघोषः । ( ३ ) कुत्सितः शब्दो गुदरवः । ( ४ ) शैथिल्यं विश्लिष्टता गाधता च ( ५ ) कौटिल्यं शाठ्यं वक्रता वा ( ६ ) सातत्यगमनं सन्ततगमनं ( ७ ) संज्ञानं चैतन्यम् । ( ८ ) सेचनमार्द्रीभवनम् ( ९ ) दन्दशूक इति दन्दशूककर्तृका क्रियाऽभिधीयते ।

(१) इदि, परमैश्वर्य्ये। विदि, अवयवे "भिदि" इति पाठान्तरम्। (२) गडि, वदनैकदेशे। णिदि, कुत्सायाम्। (३) टुनदि, समृद्धौ। चदि, आह्लादे। त्रदि, चेष्टायाम्। कदि, क्रदि, क्लदि, आह्वाने रोदने च। क्लिदि, परिदेवने। शुन्ध, शुद्धौ। इत्युदात्ता उदात्तेतः॥

[ अथ कवर्गीयान्ताः ] शीकादयः श्लाघृन्ता द्विचत्वारिंशदात्मनेभाषाः॥

शीकृ, सेचने। लोकृ, दर्शने। श्लोकृ, संघाते। द्रेकृ, ध्रेकृ, शब्दोत्साहयोः। रेकृ, शङ्कायाम्। सेकृ, स्रेकृ, स्रकि, श्रकि, श्लकि, गतौ। शकि, शङ्कायाम्। अकि, लक्षणे। वकि, कौटिल्ये। मकि, मण्डने। ककि, लौल्ये। कुक, वृक, आदाने। चक, तृप्तौ प्रतिघाते च। ककि, वकि, श्वकि, त्रकि, ढौकृ, त्रौकृ (४) ष्वष्क, वस्क, मस्क, टिकृ, टीकृ, तिकृ, तीकृ, रघि, लघि, गत्यर्थाः। "लघि" भोजननिवृत्तावपि। अघि, वघि, मघि, गत्याक्षेपे। गतौ गत्यारम्भे चेत्यन्ये। "मघि" कैतवे च। राघृ, लाघृ, द्राघृ, ध्राघृ, सामर्थ्ये। द्राघृ आयामे च। श्लाघृ, कत्थने। इत्युदात्ता अनुदात्तेतः॥

अथ फक्कादयः शिघ्यन्ताः पञ्चाशत् परस्मैभाषाः॥

फक्क, नीचैर्गतौ। तक, हसने। तकि, कृच्छ्रजीवने। बुक्क, भषणे। कख, हसने। ओखृ, राखृ, लाखृ, द्राखृ, ध्राखृ, शोषणाऽलमर्थयोः। शाखृ, श्लाखृ, व्याप्तौ। (५) उख, उखि, वख, वखि, मख, मखि, णख, णखि, रख, रखि, लख लखि, इख, इखि, ईखि, वल्ग, रगि, लगि, अगि, वगि, मगि, तगि, त्वगि, श्रगि, श्लगि, इगि, रिगि, लिगि, गत्यर्थाः। रिख, त्रख, त्रखि, शिखि, इत्यपि केचित्। 'त्वगि' कम्पने च। युगि, जुगि, वुगि, वर्जने। घघ, हसने। मघि, मण्डने। शिघि, आघ्राणे। इत्युदात्ता उदात्तेतः॥

---

(१) लिटि—अचस्तास्वत्थल्यनिटो नित्यम्। ७। २। ६१। ऋतो भारद्वाजस्य। ७। २। ६३। (२) गड्यन्ताः पञ्चैते न तिङ्विषया इति काश्यपः। अन्ये तु तिङमपीच्छन्ति। (३) आदिर्ञिटुडवः। १। ३। ५। (४) वा०—सादेशे सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधः। (५) लिटि—अभ्यासस्याऽसवर्णे। ६।४।७८।

---

(१) इह वदनैकदेशारम्भलक्षणा क्रिया वदनैकदेशशब्देनोच्यते (२) अत्र संघातो ग्रन्थः। (३) आयामो दैर्घ्यम् (४) भषणमिह श्वरवः।

[ अथ चवर्गीयान्ताः ] वर्चादय ईजन्ता एकविंशतिरात्मनेभाषाः ॥

वर्च, दीप्तौ । षच, सेचने सेवने च । लोचृ, दर्शने । शच, व्यक्तायां वाचि । श्वच, श्वचि, गतौ । कच, बन्धने । कचि, काचि, दीप्तिबन्धनयोः । मच, मुचि, कल्कने । मचि, धारणोच्छ्रायपूजनेषु । पचि' व्यक्तीकरणे । ष्टुच, प्रसादे । ऋज, गति स्थानार्जनो पार्जनेषु । ऋजि, भृजी, भर्जने । एजृ, भ्रेजृ, भ्राजृ, दीप्तौ । ईज, गतिकुत्सनयोः । इत्युदात्ता अनुदात्तेतः ॥

अथ शुचादयो व्रज्यन्ता द्विसप्ततिः परस्मैभाषाः ॥

शुच, शोके । कुच, शब्दे तारे । कुञ्च, क्रुञ्च, कौटिल्याल्पीभावयोः । लुञ्च, अपनयने । अञ्चु, गति पूजनयोः । वञ्चु, चञ्चु, तञ्चु, त्वञ्चु, म्रुञ्चु, म्लुञ्चु, (१) म्रुचु, म्लुचु गत्यर्थाः । ग्रुचु, ग्लुचु, कुजु, खुजु, स्तेयकरणे । ग्लुञ्चु, षस्ज, गतौ । गुजि, अव्यक्ते शब्दे । अर्च, पूजायाम् । म्लेछ, अव्यक्ते शब्दे । लछ, लाछि, लक्षणे । वाछि, इच्छायाम् । आछि, आयामे । ह्रीछ, लज्जायाम् । हुर्छा, कौटिल्ये । मुर्छा मोह समुच्छ्राययोः । स्फुर्छा, विस्तृतौ । युछ, प्रमादे । उछि, उञ्छे । (२) उछी, विवासे । ध्रज, ध्रजि, धृज, धृजि, ध्वज, ध्वजि, गतौ । कूज, अव्यक्ते शब्दे । अर्ज, षर्ज, अर्जने । गर्ज, शब्दे । तर्ज, भर्त्सने । कर्ज, व्यथने । खर्ज, पूजने च । [ ३ ] अज, गति क्षेपणयोः। तेज, पालने । खज, मन्थे । खजि, गतिवैकल्ये । एजृ, कम्पने । टुओस्फूर्जा, वज्रनिर्घोषे । [ ४ ] क्षि, क्षये । क्षीज, अव्यक्ते

(१) लुङि-जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।३।१। ५८। (२) प्रायेणार्थं, विपूर्वः (३) लिडादौ-अजेर्व्यघञपोः । २ । ४ । ५६ । एरनेकाचोऽसंयोग पूर्वस्य ।६।४।८२। लुङि-सिचि वृद्धिःपरस्मैपदेषु ।७।२।१ । (४) लिटि-अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ । आशिषिलिङि—अकृत्सार्वधातुकयोर्दीर्घः । ७ । ४ । २५ ।

(१) अस्फुटेऽपशब्दे चेत्यर्थः । (२) उञ्छः कणश आदानम् (३) विवासः समाप्तिः।

शब्दे । लज, लजि, भर्जने । लाज, लाजि, भर्त्सने च । जज, जजि, युद्धे । [ १ ] तुज, हिंसायाम् । तुजि, पालने । गज, गजि, गृज, गृजि, मुज, मुजि, शब्दार्थाः । " गज " मदने च । वज, व्रज, गतौ । इति क्षियर्जन्ता उदात्ता उदात्तेतः ॥

[ अथ टवर्गीयान्ताः ] अट्टादयः शाड्यन्ताः षट्त्रिंशदात्मनेभाषाः ॥

अट्ट, अतिक्रम हिंसयोः । वेष्ट, वेष्टने । चेष्ट, चेष्टायाम् । गोष्ट, लोष्ट, सङ्घाते । घट्ट, चलने । स्फुट, विकसने । अठि, गतौ । वठि, एकचर्यायाम् । मठि, कठि, शोके । मुठि, पालने । हेठ, विबाधायाम् । एठ, च । हिडि, गत्यनादरयोः । हुडि, संघाते । कुडि, दाहे । वडि, विभाजने । मडि, च । भडि, परिभाषणे । पिडि, संघाते । मुडि, मार्जने । तुडि, तोडने । हुडि, वरणे । संहरणे, इत्येके । चडि, कोपे । शडि, रुजायां संघाते च । तडि, ताडने । पडि, गतौ । कडि, मदे । खडि, मन्थे । हेडृ, होडृ, अनादरे । बाडृ, आप्लाव्ये । द्राडृ, ध्राडृ, विशरणे । शाडृ, श्लाघायाम् । इत्युदात्ता अनुदात्तेतः ॥

अथ शौटादयो गज्यन्ता द्व्यशीतिः परस्मैभाषाः ॥

शौटृ, गर्वे । यौटृ, बन्धे । म्लेटृ, म्रेडृ, उन्मादे । ( २ ) कटे वर्षावरणयोः । चटे, इत्येके । अट, पट, गतौ । रट, परिभाषणे । लट, बाल्ये । शट, रुजाविशरणगत्यवसादनेषु । वट, वेष्टने । किट, खिट, त्रासे । शिट, षिट, अनादरे । जट, झट, संघाते । भट, भृतौ । तट, उच्छ्राये । खट, काङ्क्षायाम् । णट, नृतौ । पिट, शब्दसंघातयोः । हट, दीप्तौ । षट, अवयवे । लुट, विलोडने । लुड, इत्यन्ये । चिट, परप्रैष्ये । बिट, शब्दे । विट आक्रोशे । हिट, इत्येके । इट,

( १ ) तुजादीनां दीर्घोऽभ्यासस्य । ६ । १ । ७ । ( २ ) लुङि—ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।

( १ ) चित्तविकारे । (२) दोपधस्तोपधो वा (३) एकचर्या सहायगमनम् । (४) सनिन्दोपालम्भः, परिहासश्च । (५) तोडनं दारणं हिंसनं च । ( ६ ) आप्लवनमाप्लावः (७) विशरणमवयवविभागः । ( ८ ) डलयोरभेदात् शालतेऽइति काश्यपः ।

क्रिट, कटी, गतौ । मडि भूषायाम् । कुडि, वैकल्ये । मुड, प्रुड, मर्दने । चुडि, अल्पीभावे । मुडि, खण्डने । पुडि, चेत्येके । रुटि, लुटि, स्तेये । रुठि, लुठि, इत्येके । रुडि, लुडि इत्यपरे । स्फुटिर् विशरणे । स्फुटि, इत्यपि केचित् । पठ, व्यक्तायां वाचि । वठ, स्थौल्ये । मठ, मद, निवासयोः । कठ, कृच्छ्रजीवने । रट परिभाषणे । रठ, इत्येके । हठ, प्लुतिशठत्वयोः । बलात्कारे चेत्येके । रुठ, लुठ, उठ, उपघाते । ऊठ, इत्येके । पिठ, हिंसासंक्लेशनयोः । शठ, कैतवे च । शुठ, प्रतिघाते । शुठि, इतिकेचित् । कुठि, च । लुठि, आलस्ये प्रतीघाते च । शुठि, शोषणे । रुठि, लुठि, गतौ । (१) चुड्ड, भावकरणे । अड्ड, अभियोगे । कड्ड, कार्कश्ये । क्रीडृ, विहारे । तुडृ, तोडने । तूडृ, इत्येके । हुडृ, हूडृ, होडृ, गतौ । रौडृ, अनादरे । रोडृ, लोडृ, उन्मादे । अड, उद्यमे । लड, विलासे । कड, मदे । कडि, इत्येके । गडि, वदनैकदेशे ॥ इत्युदात्ता उदात्तेतः ॥

अथ पवर्गीयान्तास्तिपादयः ष्टुभ्यन्ताः पञ्चत्रिंशदात्मनेभाषाः ॥

[२] तिपृ, तेपृ, ष्टिपृ, ष्टेपृ, क्षरणार्थाः । 'तेपृ, कम्पने च । ग्लेपृ, दैन्ये । टुवेपृ, कम्पने । केपृ, गेपृ, ग्लेपृ, च । मेपृ, रेपृ, लेपृ, गतौ । [३] त्रपूष्, लज्जायाम् । कपि, चलने । रबि, लबि, अबि, शब्दे । लबि, अवस्रंसने च । कबृ, वर्णे । क्लीबृ, अधाष्टर्ये । क्षीबृ, मदे । शीभृ, कत्थने । चीभृ, च । रेभृ' शब्दे । अभि, रभि, क्वचित्पठ्येते । ष्टभि, स्कभि, प्रतिबन्धे । [४] जभी, जृभि, गात्रविनामे । शल्भ, कत्थने । बल्भ, भोजने । गल्भ, धाष्टर्ये, श्रम्भु, स्रम्भु, प्रमादे । ष्टुभु, स्तम्भे । इति तिपिवर्जमुदात्ता अनुदात्तेतः ॥

---

(१) चुड्डादयस्त्रयो दोपधाः । (२) एकाच उपदेशेऽनुदात्तात् । ७ । २ । १० । लिङ्सिचावात्मनेपदेषु । १।२।११। (३) लिटि–तॄफलभजत्रपश्च ।६।४।१२२ । (४) रधिजभोरचि । ७ । १ । ६१ ।

---

(१) समानाकारस्यैव पूर्वपठितत्वात्, ठान्तमध्येपाठाच्चेति । (२) कैतवं–धौर्त्यम् ।

अथ गुपादयः शुम्भ्यन्ता एकचत्वारिंशत्परस्मैभाषाः ॥

[ १ ] गुपू, रक्षणे । धूप, सन्तापे । जप, जल्प, व्यक्तायां वाचि । जप, मानसे च । चप, सान्त्वने । षप, समवाये । रप, लप, व्यक्तायां वाचि । चुप, मन्दायां गतौ, । तुप, [२] तुम्प, त्रुप, त्रुम्प, तुफ, तुम्फ, त्रुफ, त्रुम्फ, हिंसार्थाः । पर्प, रफ, रफि, अर्ब, पर्ब, लर्ब, बर्ब, मर्ब, कर्ब, खर्ब, गर्ब, शर्ब, षर्ब, चर्ब, गतौ । कुबि, आच्छादने । लुबि, तुबि, अर्दने । चुबि, वक्त्रसंयोगे । षृभु, षृम्भु, हिंसार्थौ । षिभु, षिम्भु, इत्येके । शुभ, शुम्भ, भाषणे । भासन इत्येके । हिंसायामित्यन्ये । इत्युदात्ता उदात्तेतः ॥

अथाऽनुनासिकान्ता घिण्यादयो दशात्मनेभाषाः ॥

घिणि, घुणि, घृणि, ग्रहणे । घुण, घूर्ण, भ्रमणे । पण, व्यवहारे स्तुतौ च । पन, च । भाम, क्रोधे । [३] क्षमूष्, सहने । [४] कमु, कान्तौ ॥ इति घिण्यादय उदात्ता अनुदात्तेतः ॥

अथाणादयः क्रम्यन्तास्त्रिंशत्परस्मैभाषाः ॥

अण, रण, वण, भण, मण, कण, क्वण, व्रण, भ्रण, ध्वण, शब्दार्थाः । धण, इति केचित् । ओणृ, अपनयने । शोणृ, वर्णगत्योः । श्रोणृ, संघाते । श्लोणृ, च । पैणृ, गतिप्रेरणश्लेषणेषु । प्रैणृ, इति केचित् । ध्रण, शब्दे । बण, इत्यपि केचित् । कनी, दीप्तिकान्तिगतिषु । ष्टन, वन, शब्दे । वन,

---

( १ ) गुपूधूपविच्छिपणिपनिभ्य आयः । ३ । १ । २८ । सनाद्यन्ता धातवः । ३ । १ । ३२ । आयादय आर्द्धधातुके वा । ३ । १ । ३१ । कास्प्रत्ययादाममन्त्रे लिटि । ३ । १ । ३५ । अतो लोपः । ६ । ४ । ४८ । ( २ ) शे मुचादीनाम् । ( ३ ) लिटि—म्वोश्च । ८ । २ । ६५ । ( ४ ) कमेर्णिङ् । ३ । १ । ३० । लिटि—अयामन्ताल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५ । लुङि—णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ । णेरनिटि । ६ । ४ । ५१ । णौ चङ्युपधाया ह्रस्वः । ७ । ४ । १ । चङि । ६ । १ । ११ । सन्वल्लघुनि चङ्परेऽनग्लोपे । ७ । ४ । ९३ । सन्यतः । ७ । ४ । ७९ । दीर्घो लघोः । ७ । ४ । ९४ । वा०—कमेश्च्लेश्चङ् वक्तव्यः ।

---

( १ ) समवायः-सम्बन्धः सम्यगवबोधो वा । ( २ ) अपनयनं—दूरीकरणम् ।

[१] षण, संभक्तौ । अम, गत्यादिषु । द्रम, हम्म, मीमृ, गतौ । 'मीमृ' शब्दे च । [ २ ] चमु, छमु, जमु, झमु, अदने । जिमु, इति केचित् । [ ३ ] क्रमु, पादविक्षेपे । इत्युदात्ता उदात्तेतः ॥

( अथान्तस्थान्ताः ) अयादयो रेवत्यन्ताः सप्तत्रिंशदात्मनेभाषाः ॥

[ ४ ] अय, वय, पय, मय, चय, तय, णय, गतौ । दय, दानगतिरक्षणहिंसादानेषु । रय, गतौ । ऊयी, तन्तुसन्ताने । पूयी, विशरणे दुर्गन्धे च । क्नूयी, शब्दे उन्दे च । क्ष्मायी, विधूनने । स्फायी, [ ५ ] ओप्यायी, वृद्धौ । तायृ, सन्तानपालनयोः । शल, चलनसंवरणयोः । वल, वल्ल, संवरणे संचलने च । मल, मल्ल, धारणे । भल, भल्ल, परिभाषणहिंसादानेषु । कल, शब्दसंख्यानयोः । कल्ल, अव्यक्ते शब्दे । अशब्दइतिकेचित् । तेवृ, देवृ, देवने । षेवृ, गेवृ, ग्लेवृ, पेवृ, मेवृ, म्लेवृ, सेवने । शेवृ, खेवृ, क्लेवृ, इत्यप्येके । रेवृ, प्लवगतौ । इत्युदात्ता अनुदात्तेतः ॥

अथ मव्यादयोऽवत्यन्ताः सप्तनवति परस्मैभाषाः ॥

मव्य, बन्धने । सूर्क्ष्य, ईर्क्ष्य, ईर्ष्य, ईर्ष्यार्थाः । हय, गतौ । शुच्य, अभिषवे । 'चुच्य' इत्येके । हर्य्य, गतिकान्त्योः । [ ६ ] अल, भूषणपर्याप्ति वारणेषु । ञिफला, विशरणे । मील, श्मील, स्मील, क्ष्मील, निमेषणे । पील, प्रतिष्टम्भे । णील, वर्णे । शील, समाधौ । कील, बन्धने । कूल, आवरणे । शूल, रुजायां संघोषे च । तूल, निष्कर्षे ।

(१) ये विभाषा ।६।४।४३। (२) ष्ठिवुक्लमुचमां शिति ।७।३।७५। वा०—दीर्घत्वमाङि चमइति वक्तव्यम् । (३) वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ । ७० । क्रमः परस्मैपदेषु । ७ । ३ । ७६ । स्नुक्रमोरनात्मनेपदनिमित्ते । ७ । २ । ३६ । ( ४ ) दयायासश्च । ३ । १ । ३७ । विभाषेटः । ८ । ३ । ७९ । उपसर्गस्यायतौ । ८ । २ । १९ । ( ५ ) लिड्यङोश्च । ६ । १ । २९ । लुङि—दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । ३ । १ । ६१ । चिणो लुक् । ६ । ४ । १०४ । ( ६ ) अतो ल्रान्तस्य । ७ । २ । २ ।

( १ ) सन्तानः-प्रबन्धः । ( २ ) संवरणमाच्छादनम् । ( ३ ) अवयवानां शिथिलीकरणं सुरया सन्धानंवाऽभिषवः । (४) निमेषणं-संकोचः ॥

पूल, संघाते । मूल, प्रतिष्ठायाम् । फल, निष्पत्तौ । चुल्ल, भावकरणे । फुल्ल, विकसने । चिल्ल, शैथिल्ये भावकरणे च । तिल, गतौ । तिल्ल, इत्येके । वेल्ऌ, चेल्ऌ, केल्ऌ, खेल्ऌ, क्ष्वेल्ऌ, वेल्ल, चलने । पेल्ऌ, फेल्ऌ, शेल्ऌ, गतौ । षेल्ऌ, इत्येके । स्खल, संचलने । खल, संचये । गल, अदने । षल, गतौ । दल, विशरणे । श्वल, श्वल्ल, आशु गमने । खोलृ, खोर्ऋ, गतिप्रतिघाते । धोर्ऋ, गतिचातुर्ये । त्सर, छद्मगतौ, । क्मर, हूर्छने । अभ्र, वभ्र, मभ्र, चर, गत्यर्थाः । चर, भक्षणे च । (१) ष्ठिवु, निरसने ।(२) जि,जये । जीव, प्राणधारणे । पीव, मीव, तीव, णीव, स्थौल्ये । क्षिवु, क्षेवु, निरसने । उर्वी, तुर्वी, थुर्वी, दुर्वी, धुर्वी, हिंसार्थाः । गुर्वी, उद्यमने । मुर्वि, बन्धने । पुर्व, पर्व, मर्व, पूरणे । चर्व, अदने । भर्व, हिंसायाम् । कर्व, खर्व, गर्व, दर्पे । अर्व, शर्व, षर्व, हिंसायाम् । इवि, व्याप्तौ । पिवि, मिवि, णिवि, सेचने सेवने चेत्येके । हिवि, दिवि, (३) धिवि, जिवि, प्रीणनार्थाः । रिवि, रवि, धवि, गत्यर्थाः । (४) कृवि, हिंसाकरणयोश्च । मव, बन्धने । अँवरक्षणगति कान्ति प्रीति तृप्त्यवगम प्रवेश श्रवण स्वाम्यर्थ याचन क्रियेच्छा दीप्त्यवाप्त्यालिङ्गन हिंसा दान भाग वृद्धिषु । इति जयतिवर्जमुदात्ता उदात्तेतः ॥

धावु, गतिशुद्ध्योः । उदात्तः स्वरितेदुभयतोभाषः ॥

[ अथोष्मान्ताः ] तत्र धुक्षादयो घुष्यन्ता द्विपञ्चाशदात्मनेभाषाः ॥

धुक्ष, धिक्ष, सन्दीपनक्लेशनजीवनेषु । वृक्ष, वरणे । शिक्ष, विद्योपादाने । भिक्ष, भिक्षायामलाभे लाभे च । क्लेश, अव्यक्तायां वाचि बाधने च । दक्ष, वृद्धौ शीघ्रार्थे च । दीक्ष, मौण्ड्येज्योपनयन नियम व्रतादेशेषु । ईक्ष, दर्शने । ईष, गति हिंसा दर्शनेषु । भाष,

---

(१) आ० लिङि—हलि च । ८ । २ । ७७ । (२) संल्लिटोर्जेः । ७ । ३ । ५७ । (३) धिन्विकृण्व्योरच् । ३ । १ । ८० । लोपश्चास्यान्यतरस्यां म्वोः । ६ । ४ । १०७ । उतश्च प्रत्ययादसंयोगपूर्वात् । ६ । ४ । १०६ । (४) वा०—ऋवर्णाच्चेति वक्तव्यम् । ८ । ४ । १ ।

---

(१) हूर्छनं–कौटिल्यम् । (२) निरसनंमुखविकारनिःसारणम् । (३) एकोनविंशतिरर्थाः । कान्तिः-शोभा, दीप्तिस्तेजः । स्वाम्यर्थः–स्वामित्वम् । (४) पञ्चार्थाः ।

ध्यक्तायां वाचि । वर्ष, स्नेहने । गेषृ, अन्विच्छायाम् । ग्लेषृ, इत्यन्ये । पेषृ, प्रयत्ने । जेषृ, णेषृ, एषृ, प्रेषृ, गतौ । रेषृ, हेषृ, ह्रेषृ, अव्यक्ते शब्दे । कासृ, शब्दकुत्सायाम् । भासृ, दीप्तौ । णासृ, रासृ, शब्दे । णस, कौटिल्ये । भ्यस, भये । आङः शसि, इच्छायाम् । ग्रसु, ग्लसु, अदने । ईह, चेष्टायाम् । बहि, महि, वृद्धौ । अहि, गतौ । गर्ह, गल्ह, कुत्सायाम् । बर्ह, बल्ह, प्राधान्ये । वर्ह, वल्ह, परिभाषणहिंसाऽऽच्छादनेषु । प्लिह, गतौ । वेहृ, जेहृ, बाहृ, प्रयत्ने । द्राहृ, निद्राक्षये । निक्षेप इत्येके । काशृ, दीप्तौ । ऊह, वितर्के । (१) गाहू, विलोडने । (२) गृहू, ग्रहणे । ग्लह, च । घुषि, कान्तिकरणे ॥ इत्युदात्ता अनुदात्तेतः ॥

अथ घुषिरादयोऽर्हत्यन्ता एकनवति परस्मैभाषाः ॥

घुषिर्, अविशब्दने । शब्दइत्यन्ये । (३) अक्षू, व्याप्तौ (४) तक्षू, त्वक्षू, तनूकरणे । उक्ष, सेचने । रक्ष, पालने । णिक्ष, चुम्बने । तृक्ष, स्तृक्ष, णक्ष, गतौ । वक्ष, रोषे । संघात इत्येके । मृक्ष, संघाते । म्रक्ष, इत्येके । तक्ष, त्वचने, । पक्ष, परिग्रह इत्येके । सूर्क्ष, आदरे । काक्षि, वाक्षि, माक्षि, काङ्क्षायाम् । द्राक्षि, ध्राक्षि, ध्वाक्षि, घोरवासिते च । चूष, पाने । तूष, तुष्टौ । पूष, वृद्धौ । मूष, स्तेये । लूष, रूष, भूषायाम् । शूष, प्रसवे । यूष, हिंसायाम् । जूष, च । भूष, अलङ्कारे । ऊष, रुजायाम् । ईष, उञ्छे । कष, खष, शिष, जष, झष, शष, वष, मष, रुष, (५) रिष, हिंसार्थाः । भष, भर्त्सने ।

(१) होढः । ८ । २ । ३१ । एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८ । २ । ३७ । षढोःकःसि । ८ । २ । ४१ । ढोढेलोपः । ८ । ३ । १३ । (२) शलइगुपधादनिटःक्सः । ३ । १ । ४५ । क्सस्याचि । ७ । ३ । ७२ । (३) अक्षोऽन्यतरस्याम् । ३ । १ । ७५ । स्कोःसंयोगाद्योरन्तेच । ८ । २ । २९ । (४) तनूकरणे तक्षः । ३ । १ । ७६ । (५) तीषसहलुभरुषरिषः । ७ । २ । ४८ ।

[१] अन्विच्छाऽन्वेषणम् । [२] वितर्कः-सम्भावनम् । [३] अप्रतिज्ञाने [४] त्वचनं-सम्वरणम् । [५] इहभर्त्सनंस्वरवः ।

(१)उष, दाहे। जिषु, विषु, मिषु, सेचने।पुष, पुष्टौ । श्रिषु,श्लिषु,प्रुषु, प्लुषु, दाहे । पृषु,वृषु, मृषु, सेचने । मृषु, सहने च । इतरौ हिंसासंक्लेशनयोश्च । घृषु, संघर्षे । हृषु, अलीके । तुस, ह्रस, ह्लस, रस, शब्दे । लस, श्लेषण क्रीडनयोः । ( २ ) घस्लृ, अदने । जर्ज, चर्च, झर्झ, परिभाषण हिंसा तर्जनेषु।पिसृ, पेसृ, गतौ । हसे, हसने । णिस, समाधौ । मिश, मश, शब्दे रोषकृते च । शव, गतौ । शश, प्लुतगतौ । शसु, हिंसायाम् । शंसु, स्तुतौ । चह, परिकल्कने । मह, पूजायाम् । रह, त्यागे । रहि गतौ । दृह, दृहि, बृह, बृहि,वृद्धौ । बृहि, शब्दे च । बृहिर् इत्येके । तुहिर्, दुहिर्, उहिर्, अर्दने। अर्ह, पूजायाम् । इत्युदात्ता उदात्तेतः ॥

अथ द्युतादयः कृपूपर्यन्ताः त्रयोविंशतिरात्मनेभाषाः ॥

(३) द्युत, दीप्तौ । श्विता, वर्णे । ञिमिदा, स्नेहने । ञिष्विदा, स्नेहन मोचनयोः। मोहनयोरित्येके । ञिक्ष्विदा, चेत्येके । रुच, दीप्तावभिप्रीतौ च । घुट, परिवर्तने [५] । रुट, लुट, लुठ, प्रतिघाते । शुभ, दीप्तौ । क्षुभ, संचलने । णभ, तुभ, हिंसायाम् ।'णभ'अभावइत्येके। स्रंसु, ध्वंसु, भ्रंसु, अवस्रंसने । ध्वंसु, गतौ च । भ्रंशु, इत्यपि केचित् । स्रम्भु, विश्वासे ।(४) वृतु, वर्तने । वृधु वृद्धौ । शृधु, शब्दकुत्सायाम् । (५) स्यन्दू, प्रस्रवणे । (६) कृपू, सामर्थ्ये (वृत्) * इतिद्युतादय उदात्ता अनुदात्तेतः ॥

( १ )उषविदजागृभ्योऽन्यतरस्याम् । ३ । १ । ३७ । ( २ )सःस्यार्द्धधातुके। ७ । ४ । ४९ । पुषादिद्युताद्य्लृदितःपरस्मैपदेषु । ३ । १ । ५५ । ( ३ ) द्युतिस्वाप्योः सम्प्रसारणम् । ७ । ४ । ६७ । संप्रसारणाच्च । ६ । १ । १०८ । द्युद्भ्यो लुङि । १ । ३ । ९१ । (४) वृद्भ्यः स्यसनोः । १ । ३ । ९२ । न वृद्भ्यश्चतुर्भ्यः । ७ । २ । ५९ । (५) अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु । ८ । ३ । ७२ । (६) कृपोरोलः । ८ । २ । १८ । लुटिचक्लृपः । १ । ३ । ९३ । तासि च क्लृपः । ७ । २ । ६० । * संपूर्णो द्युतादिर्वृतादिश्चेत्यर्थः ॥

[१] अलीकंत्वप्रियेऽनृते इति कोशः । [२] अयंदुर्गतावपि [३] परिकल्कनंशाठ्यम् । [४] गात्रप्रस्रवणेइति धातुवृत्तौ [५] इतस्ततोभ्रमणं–परिवर्तनम् ।

अथ घटादयस्त्वरत्यन्तास्त्रयोदशात्मनेभाषाः ॥

घट, चेष्टायाम् । (१) व्यथ, भय संचलनयोः । प्रथ, प्रख्याने । प्रस, विस्तारे । म्रद, मर्दने । स्खद, स्खदने[१] । क्षजि, गति दानयोः । दक्ष, गति हिंसनयोः । क्रप, कृपायां गतौ च । कदि, क्रदि, क्लदि, वैक्लव्ये[२] । वैकल्य इत्येके । क्रद, क्रद, क्लद, इत्यन्ये । ञित्वरा, संभ्रमे ॥ इति घटादय उदात्ता अनुदात्तेतः ॥

अथ ज्वरादयः फणाऽन्ताः सप्तपंचाशत् परस्मैभाषाः ॥

ज्वर, रोगे । गड, सेचने । हेड, वेष्टने, । वट, भट, परिभाषणे । नट, नृत्तौ । ष्टक, प्रतीघाते । चक, तृप्तौ । कखे, हसने । रगे, शङ्कायाम् । लगे, संगे । ह्रगे, ह्लगे, षगे, ष्टगे, संवरणे । कगे, नोच्यते क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये । अक, अग, कुटिलायां गतौ । कण, रण, गतौ । चण, शण, श्रण, दाने च । 'शण' गतावित्यन्ये । श्रथ, श्लथ, क्नथ, क्लथ, हिंसार्थाः । चन, च । वनु, च नोच्यते । ज्वल, दीप्तौ । ह्वल, ह्मल, चलने । स्मृ, आध्याने । दॄ, भये । नॄ, नये । श्रा, पाके । मारणतोषणनिशामनेषु ज्ञा । कम्पने, चलिः । छदिर्, ऊर्जने । जिह्वोन्मथने, लडिः । मदी, हर्ष ग्लेपनयोः । ध्वन, शब्दे, । दलि, वलि, स्खलि, रणि, ध्वनि, त्रपि, क्षपयश्च, इति केचित् । स्वन, अवतंसने । घटादयो मितः । जनीजॄष्क्नसुरञ्जोऽमन्ताश्च । ज्वलह्वलह्मलनमामनुपसर्गाद्वा । ग्लास्नावनुवमां च । न कम्यमिचमाम् । शमो दर्शने । यमो, ऽपरिवेषणे । स्खदिर्—अवपरिभ्यां च । (२) फण, गतौ । वृत् * । इति ज्वरादय उदात्ता उदात्तेतः ।

राजृ, दीप्तौ । उदात्तः स्वरितेदुभयतोभाषः ॥

टुभ्राजृ, टुभ्राशृ, टुभ्लाशृ, दीप्तौ । उदात्ता अनुदात्तेत आत्मनेभाषाः ॥

(१) व्यथो लिटि । ७ । ४ । ६८ । (२) फणां च सप्तानाम् । ६ । ४ । १२५ ।
* घटादिर्गणः समाप्तः ।

[१] स्खदनंविद्रावणम् । [२] वैक्लव्यम्—भीरुता । [३] दर्शनम् । [४]ऊर्जनं-प्राणनं वलनं वा । [५] अवतंसनं—भूषणम् । [६] परिवेषणं—भोजना ।

अथ स्यमादयः क्षरसन्ताः षड्विंशतिः परस्मैभाषाः ।

**स्यमु, स्वन, ध्वन, शब्दे । षम, ष्टम, अवैकल्ये । ज्वल, दीप्तौ । चल, कम्पने । जल, घातने । टल, ट्वल, वैक्लव्ये । ष्ठल, स्थाने । हल, विलेखने । णल, गन्धे । बन्धन इत्येके । पल, गतौ । बल, प्राणने धान्यावरोधे च । पुल, महत्त्वे । कुल, संस्त्याने बन्धुषु च । शल, हुल, (१) पत्लृ, गतौ । क्वथे, निष्पाके । पथे, गतौ । मथे, विलोडने । टुवमु, उद्गिरणे । (२) भ्रमु, चलने । क्षर, संचलने । इति स्यमादय उदात्ता उदात्तेतः ।**

**अथ द्वावनुदात्तेतौ ॥**

**(३) षह, मर्षणे । उदात्तोऽनुदात्तेत् ॥**

**रमु, क्रीडायाम् । अनुदात्तोऽनुदात्तेत् ॥**

अथ षदादयः कसन्ताः सप्त परस्मैभाषाः ॥

**(४) षद्लृ, विशरणगत्यवसादनेषु । (५) शद्लृ, शातने । (६) क्रुश, आह्वाने रोदने च । कुच, संपर्चन कौटिल्य प्रतिष्टम्भ विलेखनेषु । बुध, अवगमने । रुह, बीजजन्मनि प्रादुर्भावे च । कस, गतौ । क्रुशादय उदात्ता उदात्तेतो रुहिस्त्वनुदात्तः ॥ वृत् ॥ इति ज्वलादिर्गणः ॥**

अथ हिक्कादयो गूहत्यन्ताः पञ्चचत्वारिंशदुभयतोभाषाः ॥

**हिक्क, अव्यक्ते शब्दे । अञ्चु, गतौ याचने च । अचु, इत्येके । अचि, इत्यपरे । टुयाचृ, याच्ञायाम् । रेटृ, परिभाषणे । चते, चदे, याचने । प्रोथृ, पर्याप्तौ । मिदृ, मेदृ, मेधा हिंसनयोः । मिथृ, मेथृ,**

(१) लुङि—पतः पुम् ।७।४।१९। (२) वा जॄभ्रमुत्रसाम् ।६।४।१२४। (३) सहिवहोरोदवर्णस्य । ६ । ३ । ११२ । सिवादीनां वाऽड्व्यवायेऽपि ।८।३।७१। (४) पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः। ७।३।७८। लिटि—सदेःपरस्य लिटि ।८।३।११८।(५) शदेःशितः।१।३।६०।(६) व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।८।२।३६।

(१) घातनं-तैक्ष्ण्यम् । (२) स्थानं-प्रतिष्ठा । (३) विलेखनं-कर्षणम् । (४) संस्त्यानं-संघातः । बन्ध्वनुकूलोव्यापारश्चेत्यर्थद्वयम् । (५) उद्गिरणमन्तर्गतस्य मुखान्निस्सारणम् । (६) अवसादनं-नाशः ।

इत्येके। मिधृ, मेधृ, इत्यन्ये। मेधृ, संगमे च। णिदृ, णेदृ, कुत्सासन्निकर्षयोः। शृधु, मृधु, उन्दने। बुधिर्, बोधने। उबुन्दिर्, निशामने। वेणृ, गति ज्ञान चिन्ता निशामन वादित्रग्रहणेषु। वेनृ, इत्येके। (१) खनु, अवदारणे। चीवृ, आदान संवरणयोः। (२) चायृ, पूजा निशामनयोः। व्यय, गतौ। दाशृ, दाने। भेषृ, भये। गतावित्येके। भ्रेषृ, भ्लेषृ, गतौ। अस, गति दीप्त्या दानेषु। अष, इत्येके। स्पश, बाधन स्पर्शनयोः। लष, कान्तौ। चष, भक्षणे। छष, हिंसायाम्। झष, आदान संवरणयोः। भक्ष, भ्लक्ष, अदने। भक्ष, च। दासृ, दाने। माहृ, माने। (३) गुहू, संवरणे। इति हिक्कादय उदात्ताः स्वरितेतः॥

अथाऽजन्ताः श्रिञादयो नयसन्ताः पञ्चोभयतोभाषाः॥

श्रिञ्, सेवायाम्। उदात्तः स्वरितेत्। (४) भृञ्, भरणे। हृञ्, हरणे। धृञ्, धारणे। णीञ्, प्रापणे। इति भरत्यादयोऽनुदात्ताः स्वरितेतः॥

अथ धेटादयो जयसन्ताः षट्चत्वारिंशत्परस्मैभाषाः॥

(५) धेट्, पाने। (६) ग्लै, म्लै, हर्षक्षये। द्यै, न्यक्करणे।

---

(१) लिटि—गमहनजनखनघसां लोपः क्ङित्यनङि। ६। ४। ९८। (२) चायः की। ६। १। ३५। (३) ऊदुपधाया गोहः। ६। ४। ८९। ढ्रलोपे पूर्वस्य दीर्घोऽणः। ६। ३। १११। लुङि—लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। ७। ३। ७३। (४) ऋद्धनोः स्ये। ७। २। ७०। लिङि—रिङ्शयग्लिङ्क्षु। ७। ४। २८। लुङि—ह्रस्वादङ्गात्। ८। २। २७। (५) आदेच उपदेशेऽशिति। ६। १। ४५। लिटि—आत औ णलः। ७। १। ३४। आतो लोप इटि च। ६। ४। ६४। लिङि—दाधाघ्वदाप्। १। १। २०। एर्लिङि। ६। ४। ६७। लुङि—विभाषा धेट्श्व्योः। ३। १। ४९। विभाषा घ्राधेट्शाच्छासः। २। ४। ७८। आतः। ३। ४। ११०। यमरमनमातां सक्च। ७। २। ७३। (६) वान्यस्य संयोगादेः। ६। ४। ६८।

---

(१) निशामनं-चक्षुर्विज्ञानम्। (२) वादित्रग्रहणं वादनार्थवाद्यभाण्डग्रहणम्। (३) स्पर्शनं-ग्रथनम् (४) कान्तिरिच्छा। (५) न्यक्करणम्-अधः करणम्।

द्रै, स्वप्ने। ध्रै, तृप्तौ । ध्यै, चिन्तायाम् । रै, शब्दे । स्त्यै, ष्ट्यै, शब्द संघातयोः । खै, खदने । क्षै, जै, षै, क्षये । कै, गै, शब्दे । शै, श्रै, पाके । पै, ओवै, शोषणे । ष्टै, वेष्टने । ष्णै, वेष्टने । शोभायां चेत्येके । दैप्, शोधने । पा, पाने । घ्रा, गन्धोपादाने । ध्मा, शब्दाग्निसंयोगयोः । ष्ठा, गतिनिवृत्तौ । म्ना, अभ्यासे । दाण्, दाने । (१) ह्वृ, कौटिल्ये । स्वृ, शब्दोपतापयोः । स्मृ, चिन्तायाम् । ह्वृ, संवरणे । (२) सृ, गतौ । (३) ऋ, गति प्रापणयोः । गृ, घृ, सेचने । ध्वृ, हूर्छने । स्रु, गतौ । (४) षु, प्रसवैश्वर्ययोः । (५) श्रु, श्रवणे । ध्रु, स्थैर्ये । दु, द्रु, गतौ । जि, ज्रि, अभिभवे । इति घेटादयोऽनुदात्ताः ॥

अथ स्मिङादयो डीङन्ता ङितः द्वाविंशतिरात्मनेभाषाः ॥

ष्मिङ्, ईषद्धसने । गुङ्, अव्यक्ते शब्दे । गाङ्, गतौ । कुङ्, घुङ्, उङ्, ङुङ्, शब्दे । उङ्, कुङ्, खुङ्, गुङ्, घुङ्, ङुङ्, चेत्याहुरन्ये । च्युङ्, ज्युङ्, प्रुङ्, प्लुङ्, गतौ । क्लुङ्, इत्येके । रुङ्, गति रेषणयोः । धृङ्, अवध्वंसने । मेङ्, प्रणिदाने । (६) देङ्, रक्षणे । श्यैङ्, गतौ । प्यैङ्, वृद्धौ । त्रैङ्, पालने ॥

इति ष्मिङ्प्रभृतयोऽनुदात्ताः ॥

पूङ्, पवने । मूङ्, बन्धने । डीङ्, विहायसागतौ । इति पूङादय उदात्ताः ॥

(७) तॄ, प्लवनसंतरणयोः । उदात्तः परस्मैभाषः ॥

(१) ऋतश्चसंयोगादेर्गुणः ।७।४।१०। लिङि–गुणोऽर्त्तिसंयोगाद्योः।७।४।२९। (२) लुङि–सर्त्तिशास्त्यर्त्तिभ्यश्च । ३ । १ । ५६ । ऋदृशोऽङिगुणः ।७।४।१६। (३) ऋच्छत्यॄताम् । ७ । ४ । ११ । इडत्त्यर्त्तिव्ययतीनाम् । ७ । २ । ६६ । (४) स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ । (५) श्रुवः शृ च । ३ । १ । ७४ । हुश्नुवोः सार्वधातुके । ६ । ४ । ८७ । (६) दयतेर्दिगि लिटि ।७।४।९। स्थाघ्वोरिच्च । १।२।१७। (७) वॄतो वा । ७ । २ । ३८ । लिङि—ऋत इद्धातोः । ७ । १ । १०० । लुङि-सिचि च परस्मैपदेषु । ७ । २ । ४० ।

[ १ ] खदनं-स्थैर्य्यं हिंसाच । [ २ ] प्रसवोऽभ्यनुज्ञा ।

अथ गुपादयो हदत्यन्ताः अष्टावात्मनेभाषाः ॥

(१) गुप, गोपने। तिज, निशाने। (२) मान, पूजायाम्। वध, बन्धने। गुपादयश्चत्वार उदात्ता अनुदात्तेतः॥

रभ, राभस्ये[1]। डुलभष्, प्राप्तौ। ष्वञ्ज, परिष्वङ्गे। हद, पुरीषोत्सर्गे[2]। रभादयश्चत्वारोऽनुदात्ता अनुदात्तेतः॥

अथ ञिष्विदादयो मेहसन्ताः पञ्चदश परस्मैभाषाः॥

ञिष्विदा, अव्यक्ते शब्दे। उदात्तः। स्कन्दिर्, गतिशोषणयोः। यभ, मैथुने। णम, प्रह्वत्वे शब्दे च। गम्लृ, सृप्लृ, गतौ। यम, उपरमे। तप, सन्तापे। त्यज, हानौ। षञ्ज, संगे। दृशिर्, प्रेक्षणे। दंश, दशने। कृष, विलेखने। दह, भस्मीकरणे। मिह, सेचने। स्कन्दादयोऽनुदात्ताः। इति ष्विदादय उदात्तेतः॥

अथैकः परस्मैभाषः॥

(३) कित, निवासे रोगापनयने च। उदात्तेत्॥

अथ द्वावुभयतोभाषौ॥

(४) दान, खण्डने। (५) शान, तेजने। स्वरितेतौ॥

अथ पचादयो वहत्यन्ता नवोभयतोभाषाः॥

डुपचष्, पाके। षच, समवाये। भज, सेवायाम्। (६) रञ्ज, रागे। शप, आक्रोशे[3]। त्विष, दीप्तौ। (७) यज, देव पूजा संगतिकरण दानेषु। डुवप्, बीजसन्ताने छेदने च। वह, प्रापणे॥ इति पचादयोऽनुदात्ताः स्वरितेतः सचतिस्तूदात्तः।

(१) गुप्तिज्किद्भ्यः सन्। ३।१।५। सन्यङोः। ६।१।९। (२) मानबधदानशान्भ्योदीर्घश्चाभ्यासस्य। ३।१।६। (३) संशये प्रायेणायं विपूर्वः। अस्यानुदात्तेत्वमाश्रित्यकेचित् "चिकित्सते" इत्युदा हरन्ति। (४) अर्थविशेषे सन्निष्यते। ३।१।६। (५) अर्थविशेषे सन्निष्यते। (६) रंजेश्च। ६।४।२६। (७) लिटि-लिट्यभ्यासस्योभयेषाम्। ६।१।१७। वचिस्वपियजादीनां किति ६।१।१५।

[१] राभस्यमुपक्रमः। [२] पुरीषो-गूथम्। (३) आक्रोशोविरुद्धानुध्यानम्।

अथैकः परस्मैभाषः ॥

( १ ) वस, निवासे । उदात्तेदनुदात्तः ।

अथ व्येञादयस्त्रय उभयतोभाषाः ॥

( २ ) वेञ्, तन्तुसन्ताने । ( ३ ) व्येञ्, संवरणे । ( ४ ) ह्वेञ्, स्पर्द्धायां शब्दे च । व्येञादयोऽनुदात्ताः ।

अथ द्वौ परस्मैभाषौ ॥

वद, व्यक्तायां वाचि । ( ५ ) टुओश्वि, गतिवृद्ध्योः । इत्युदात्तौ । वृत् । इति यजादिर्गणः समाप्तः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादि संग्रहः । ( ६ ) ऋति, सौत्रो धातुः ।

इति शब्विकरणा भ्वादयः ॥

---

( १ ) शासिवसिघसीनां च । ८ । ३ । ६० । ( २ ) लिटि–वेञो वयिः । २ । ४ । ४१ । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ । लिटि वयो यः । ६ । १ । ३८ । वश्चास्यान्यतरस्यां किति । ६ । १ । ३९ । वेञः । ६ । १ । ४० । ( ३ ) न व्यो लिटि । ६ । १ । ६४ । ( ४ ) लिटि–अभ्यस्तस्य च । ६ । १ । ३३ । लुङि–लिपिसिचिह्वश्च । ३ । १ । ५३ । आत्मनेपदेष्वन्यतरस्याम् । ३।१।५४। ( ५ ) लिटि–विभाषा श्वेः । ६ । १ । ३० । लुङि–श्वयतेरः । ७।४।१८। ( ६ ) ऋतेरीयङ् । ३ । १ । २९ ।

# अथांऽदादिर्गणः ॥

अथ द्वौ परस्मैभाषौ॥

(१) अद, भक्षणे । (२) हन, हिंसागत्योः । अनुदात्तावुदात्तेतौ ॥

अथ चत्वार उभयतोभाषाः॥

(३) द्विष, अप्रीतौ । (४) दुह, प्रपूरणे । दिह, उपचये । लिह, आस्वादने । द्विषादयोऽनुदात्ताः स्वरितेतः ॥

अथैक आत्मनेभाषः॥

(५) चक्षिङ्, व्यक्तायां वाचि । अयं दर्शनेऽपि ।

अथ पृच्यन्ताः षोडशात्मनेभाषाः ॥

ईर, गतौ कम्पने च । ईड, स्तुतौ (६) ईश, ऐश्वर्ये । आस, उपवेशने । आङः शासु, इच्छायाम् । वस, आच्छादने । कसि, गतिशासनयोः । कस इत्येके । कश इत्यन्ये । णिसि, चुम्बने ।

(१) अदिप्रभृतिभ्यः शपः । २।४।७२ । बहुलं छन्दसि । २ । ४ । ७३ । लिटि--लिट्यन्यतरस्याम् । २ । ४ । ४० । लोटि--हुझल्भ्योहेर्धिः । ६ । ४ । १०१ । लङि-अदः सर्वेषां । ७।३।१०० । लुङसनोर्घस्लृ ।२।४।३७। (२) अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलिक्ङिति ।६।४।३७। वमोर्वा ।८।४। २३। हो हन्तेर्ञ्णिन्नेषु ।७।३।५४। अभ्यासाच्च ।७।३।५५। लोटि-हन्तेर्जः ।६।४। ३६। आ० लिङि-हनो वध लिङि । २ । ४ ।४२ । लुङि च । २ । ४ । ४३ । (३) लङि-द्विषश्च । ३ । ४ । ११२ । (४) दादेर्धातोर्घः । ८ । २ । ३२ । (५) चक्षिङःख्याञ् । २ । ४ । ५४ । लिटि—वा लिटि । २ । ४ । ५५ । वा०—खशादिर्वा । २ । ४ । ५४ । वा०—असिद्धे शस्य यवचनं विभाषा । लुङि—अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ । वा०—वर्जने प्रतिषेधः । २ । ४ । ५४ । (७) ईशः से । ७ । २ । ७७ । ईड्जनोर्ध्वे च । ७ । २ । ७८ ।

णिजि, शुद्धौ । सिजि, अव्यक्ते शब्दे । पिजि, वर्णे । पृजीत्येके । वृजी, वर्जने । पृची, संपर्चने । इतीरादय उदात्ता अनुदात्तेतः ॥

अथ द्वावात्मनेभाषौ ॥

पूङ्, प्राणिगर्भविमोचने । (१) शीङ् स्वप्ने । उदात्तौ ।

अथ पञ्च परस्मैभाषाः ॥

(२) यु, मिश्रणेऽमिश्रणे च (३) रु, शब्दे । णु, स्तुतौ । टुक्षु, शब्दे । क्ष्णु, तेजने । इत्युदात्ताः ॥

अथैक उभयतोभाषः ॥

(४) ऊर्णुञ्, आच्छादने । उदात्तः ॥

अथ पञ्च परस्मैभाषाः ॥

ष्णु, प्रस्रवणे । ष्णु, अभिगमने । (५) षु, प्रसवैश्वर्ययोः । कु, शब्दे । तु गतिवृद्धिहिंसासु (सौत्रोयम्) इत्यनुदात्ता उदात्तेतः ॥

अथ द्वावुभयतोभाषौ ॥

ष्टुञ्, स्तुतौ (६) ब्रूञ्, व्यक्तायां वाचि । इत्यनुदात्तौ ॥

---

(१) शीङः सार्वधातुके गुणः । ७ । ४ । २१ । शीङो रुट् । ७ । १ । ६ । (२) उतोवृद्धिर्लुकि हलि । ७ । ३ । ८९ । (३) तुरुस्तुशम्यमः सार्वधातुके । ७ । ३ । ९५ । (४) ऊर्णोतेर्विभाषा । ७ । ३ । ९० । वा०—ऊर्णोतेराम्नेतिवाच्यम् । नन्द्राः संयोगादयः । ६ । १ । ३ । विभाषोर्णोः । १ । २ । ३ । गुणोऽपृक्ते । ७ । ३ । ९१ । ऊर्णोतेर्विभाषा । ७ । २ । ६ । (५) लुङि—स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ । [६] लटि—ब्रुवः पञ्चानामादित आहो ब्रुवः । ३ । ४ । ८४ । आहस्थः । ८ । २ । ३५ । ब्रुव ईट् । ७ । ३ । ९३ । ब्रुवो वचिः । २ । ४ । ५३ । लुङि—वचउम् । ७ । ४ । २० । छान्दसलिङि—लिङ्याशिष्यङ् । ३ । १ । ८६ । छन्दस्युभयथा । ३ । ४ । ११७ । इष्टिः— स्थागागमिवचिवदिशाकिरुहयः प्रयोजनम् ।

---

(१) प्रसवोऽभ्यनुज्ञानम् ।



अथैकोनविंशतिः परस्मैभाषा इङ्त्वात्मनेभाषः ॥

(१) इण् गतौ । (२) इङ् अध्ययने । (३) इक् स्मरणे । वी, गति व्याप्ति प्रजन[1] कान्त्य सन खादनेषु । (४) या, प्रापणे । वा, गतिगन्धनयोः[2] । भा, दीप्तौ । ष्णा, शौचे । श्रा, पाके । द्रा, कुत्सायां गतौ । प्सा, भक्षणे । पा, रक्षणे । रा, दाने । ला, आदाने । दाप्, लवने । (५) ख्या, प्रकथने । प्रा, पूरणे । मा, माने । (६) वच, परिभाषणे, इत्यनुदात्ता उदात्तेतः ॥

अथ चत्वारः परस्मैभाषाः ॥

(७) विद, ज्ञाने । (८) अस, भुवि । (९) मृजू, शुद्धौ । (१०) रुदिर्, अश्रुविमोचने । इत्युदात्ता उदात्तेतः ॥

---

[१]-इणो यण् ।६।४।८१ । दीर्घ इणः किति ।७।४।६९। लिङि-एतेर्लिङि। ७।४।२४ । लुङि-इणो गा लुङि । २।४।४५। [२] नित्यमधिपूर्वः । लिटि-गाङ्लिटि । २ । ४ । ४९ । लुङ्लृङोः-विभाषालुङ्लृङोः । २ । ४ । ५० । गाङ् कुटादिभ्योऽञ्णिन्ङित् । १ । २ । १ । घुमास्थागापाजहातिसां हलि । ६ । ४ । ६६ । [३] अयमप्यधिपूर्वः । वा०—इणवदिक इति वक्तव्यम् । [४] लङि-लङः शाकटायनस्यैव । ३ । ४ । १११ । [५] इष्टिः-अयं सार्वधातुकमात्रविषयः । [६] अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर-इत्येके ॥ [७] लटि-विदोलटो वा । ३ । ४ । ८३ । लोटि-विदांकुर्वन्त्वित्यन्यतरस्याम् । ३ । १ । ४१ । तनादिकृञ्भ्य उः । ३ । १ । ७९ । अत-उत्सार्वधातुके । ६ । ४ । ११० । लङि-दश्च । ८ । २ । ७५ । [८] श्नसोरल्लोपः । ६। ४। १११ । आर्द्धधातुके-अस्तेर्भूः । २ । ४ । ५२ । लोटि-घ्वसोरेद्धावभ्यासलोपश्च । ६ । ४। ११९ । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । ८ । ३ । ८७ । [९] मृजेर्वृद्धिः । ७ । २ । ११४ । इष्टिः-इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते । १ । १ । ३ । [१०] रुदादिभ्यः सार्वधातुके । ७ । २ । ७६ । लङि-रुदश्च पञ्चभ्यः । ७ । ३ । ९८ । अड्-गार्ग्यगालवयोः । ७ । ३ । ९९ ।

---

[१] प्रजनं-गर्भ ग्रहणम्, असनं-क्षेपणम् । [२] गन्धनं-सूचनम् ।

अथैकः परस्मैभाषः ॥

( १ ) ञिष्वप्, शये । अनुदात्तः ॥

अथ सप्त परस्मैभाषाः ॥

श्वस, प्राणने । ( २ ) अन, च । ( ३ ) जक्ष, भक्षहसनयोः । (४) जागृ, निद्राक्षये । ( ५ ) दरिद्रा, दुर्गतौ । ( ६ ) चकासृ, दीप्तौ । ( ७ ) शासु, अनुशिष्टौ । इत्युदात्ताः ।

अथ द्वावात्मनेभाषौ ॥

( ८ ) दीधीङ्, दीप्ति देवनयोः । वेवीङ्, वेतिना तुल्ये । इत्युदात्तौ ॥

अथ त्रयः परस्मैभाषाः ॥

षस, सस्ति, स्वप्ने । वश, कान्तौ । इत्युदात्ताः । चर्करीतं च ॥

अथैक आत्मनेभाषः ॥

ह्नुङ्, अपनयने । इत्यनुदात्तः ।

इति लुग्विकरणा अदादयः ॥

---

( १ ) सुविनिर्दुर्भ्यः सुपिसूतिसमाः।८।३।८८। वा०–पूर्वत्रासिद्धीयमद्विर्वचने। (२) अनितेः ।८।४।१९। ( ३ ) जक्षित्यादयःषट् ।६।१।६। अदभ्यस्तात् ।७।१।४। ( ४ ) जाग्रोऽविचिण्णल्ङित्सु ।७ । ३ ।८५। लङि–जुसि च । ७ । ३ । ८३ । ( ५ ) इद्दरिद्रस्य । ६ । ४ । ११४ । श्नाभ्यस्तयोरातः । ६ । ४ । ११२ । वा०–दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः । वा०–अद्यतन्यां वेति वक्तव्यम् । (६) लङि–तिप्यनस्तेः । ८ । २ ७३ । सिपि धातोरुर्वा । ८ । २ । ७४ । ( ७ ) शास इदङ्हलोः । ६ । ४ । ३४ । लोटि–शा हौ । ६ । ४ । ३५ । ( ८ ) यीवर्णयोर्दीधीवेव्योः । ७ । ४ । ५३ ।

---

( १ ) अनुशिष्टिर्विविच्यज्ञापनम्। ( २ ) येङ्लुगन्तमित्यर्थः ।

# अथ जुहोत्यादिर्गणः॥

अथ त्रयः परस्मैभाषाः ॥

( १ ) हु, दानादनयोः । आदाने चेत्येके । प्रीणनेऽपीतिमहाभाष्यसम्मतम् । ( २ ) ञिभी, भये । ह्री, लज्जायाम् । जुहोत्यादयोऽनुदात्ताः ।

अथैकः परस्मैभाषः ॥

( ३ ) पॄ, पालनपूरणयोः । उदात्तः । ह्रस्वान्तोऽयमित्येके ।

अथैक उभयतोभाषः ।

( ४ ) डुभृञ्, धारण पोषणयोः । अनुदात्तः ॥

अथ द्वावात्मनेभाषौ ॥

( ५ ) माङ् माने शब्दे च । ओहाङ्, गतौ । अनुदात्तौ ॥

अथैकः परस्मैभाषः ॥

( ६ ) ओहाक्, त्यागे । अनुदात्तः ॥

अथ द्वावुभयतोभाषौ ॥

( ७ ) डुदाञ्, दाने । ( ८ ) डुधाञ्, धारण पोषणयोः । दानेऽपीत्येके । अनुदात्तौ ।

---

( १ ) जुहोत्यादिभ्यः श्लुः । २ । ४ । ७५ । श्लौ । ६ । १ । १० । बहुलं छन्दसि । २ । ४ । ७६ । भीह्रीभृहुवां श्लुवच्च । ३ । १ । ३९ । ( २ ) भियोऽन्यतरस्याम् । ६ । ४ । ११५ । ( ३ ) अर्त्तिपिपर्त्त्योश्च । ७ । ४ । ७७ । उदोष्ठ्यपूर्वस्य । ७ । १ । १०२ । लिटि–शॄदॄपॄमां ह्रस्वो वा । ७ । ४ । १२ । (४) भृञामित् । ७ । ४ । ७६ । ( ५ ) ईहल्यघोः । ६ । ४ । ११३ । ( ६ ) जहातेश्च । ६ । ४ । ११६ । लोटि–आचहौ ।६।४।११७। विधिलिङि–लोपोयि ।६।४।११८। ( ७ ) घोर्लोपो लेटि वा । ७ । ३ । ७० । ( ८ ) दधस्तथोश्च । ८ । २ । ३८ । वा०–पूर्वत्रासिद्धे न स्थानिवत् ।

---

( १ ) हविः प्रक्षेपोऽत्रदानम् ।

अथ त्रय उभयतोभाषाः ॥

( १ ) णिजिर्, शौच पोषणयोः । विजिर्, पृथग्भावे । विष्लृ, व्याप्तौ । इति णिजादयोऽनुदात्ताः ॥

अथ गणान्ताः परस्मैभाषाश्छान्दसाश्चैकादश ॥

( २ ) घृ, क्षरणदीप्त्योः । ( ३ ) हृ, प्रसह्यकरणे । ऋ, सृ, गतौ । इति घादयश्चत्वारोऽनुदात्ताः ॥

( ४ ) भस, भर्त्सनदीप्त्योः । उदात्त उदात्तेत् । कि, ज्ञाने । अनुदात्तः । तुर, त्वरणे । धिष, शब्दे । धन, धान्ये । (५) जन, जनने । तुरादय उदात्ता उदात्तेतः । गा, स्तुतौ अनुदात्तः । छन्दसि वृत् ।

इति श्लुविकरणा जुहोत्यादयः ॥

# अथ दिवादिर्गणः ॥

अथ दिवादयः षड्विंशतिः परस्मैभाषाः ॥

( ६ ) दिवु, क्रीडा विजिगीषा व्यवहार द्युति स्तुति मोद मद स्वप्न कान्ति गतिषु । षिवु, तन्तुसन्ताने । स्रिवु, गतिशोषणयोः । ष्ठिवु, निरसने । स्नुसु, अदने । आदान इत्येके । अदर्शन इत्यपरे । स्नसु, निरसने । क्नसु, ह्वरणदीप्त्योः । व्युष, दाहे । प्लुष, च (७) नृती, गात्रविक्षेपे । त्रसी, उद्वेगे । कुथ, पूतीभावे । पुथ, हिं-

(१) निजां त्रयाणां गुणः श्लौ ।७।४।७५। नाभ्यस्तस्याचिपिति सार्वधातुके ।७।३।८७। (२) बहुलं छन्दसि ।७।४।७८। (३) ग्रा०-हृग्रहो र्भश्छन्दसि हस्य भत्वम् । (४) घसिभसोर्हलि च ।६।४।१००। (५) जनसनखनां सञ्झलोः ।६।४।४२। लेटि—वाच्छन्दसि । ३ । ४ । ८८ । (६) दिवादिभ्यः श्यन् । ३ । १ । ६९ । (७) सेऽसिचिकृतचृतच्छृदतृदनृतः । ७ । २ । ५७ ।

( १ ) हठात्करणे । ( २ ) कान्ति-रिच्छा । द्युतिः—शोभा । ( ३ ) ह्वरणं-कौटिल्यम् । ( ४ ) पूतीभावोदुर्गन्ध इतिमाधवः, पवित्रीभवनमित्यन्ये ।

सायाम् । गुध, परिवेष्टने । चिप, प्रेरणे । अनुदात्तः । पुष्प, विकसने । तिम, ष्टिम, ष्टीम, आर्द्रीभावे । व्रीड, चोदने लज्जायाञ्च । इष, गतौ । षह, षुह, चक्यर्थे । जॄष्, झॄष्, वयोहानौ । इति दिवादय उदात्ता उदात्तेतः ॥

अथ द्वावात्मनेभाषौ ॥

षूङ्, प्राणिप्रसवे । दूङ्, परितापे । इत्युदात्तौ ॥

अथ दीङादय एकादश आत्मनेभाषाः ॥

(१) दीङ् क्षये । डीङ्, विहायसा गतौ । धीङ्, आधारे । मीङ्, हिंसायाम् । रीङ्, श्रवणे । (२) लीङ्, श्लेषणे । व्रीङ्, वृणोत्यर्थे । (वृत्) स्वादय ओदितः । पीङ्, पाने । माङ्, माने । ईङ्, गतौ । प्रीङ्, प्रीणने । इति दीङादय अनुदात्ता डीङ्, तूदात्तः ॥

अथ चत्वारः परस्मैभाषाः ॥

(३) शो, तनूकरणे । छो, छेदने । षो, अन्तकर्मणि । दो, अवखण्डने । श्यतिप्रभृतयोऽनुदात्ताः ॥

अथ पञ्चदशात्मनेभाषाः ॥

(४) जनी, प्रादुर्भावे । दीपी, दीप्तौ । पूरी, आप्यायने । तूरी, गतित्वरण हिंसनयोः । धूरी, गूरी, हिंसागत्योः । घूरी, जूरी, हिंसावयोहान्योः । शूरी, हिंसा स्तम्भनयोः । चूरी, दाहे । तप, ऐश्वर्ये (५) वावृतु, वरणे । क्लिश, उपतापे । काशृ, दीप्तौ । वाशृ, शब्दे । इति तपिवर्जमुदात्ता अनुदात्तेतः ।

(१) दीङो युडचि क्ङिति ६।४।६३। मीनातिमिनोतिदीङां ल्यपि च ।६।१।५०। (२) विभाषा लीयतेः ।६।१।५१। (३) ओतः श्यनि ।७।३।७१। (४) ज्ञाजनोर्जा ।७।३।७९। जनिवध्योश्च ।७।३।३५। (५) केचित्त्वैश्वर्येण सह वा शब्दं संबध्नन्ति तन्मते (वृतु, वरणे) इयानेव धातुः ।

(१) चोदने इत्येव क्वचित् । (२) चक्यर्थस्तृप्तिः । (३) परितापः-खेदः । (४) आप्यायनं-पूर्णता ।

मृष, तितिक्षायाम्। ईशुचिर्, पूतीभावे। उदात्तौ।

अथ पञ्चोभयतोभाषाः ॥

(१) णह, बन्धने। रञ्ज, रागे। शप, आक्रोशे। अनुदात्ताः।

अथैकादशात्मनेभाषाः ॥

(२) पद, गतौ। खिद, दैन्ये। विद, सत्तायाम्। बुध, अवगमने। युध, संप्रहारे। अनोरुध, कामे। अण, प्राणने। अन, इत्यन्ये। उदात्तः। मन, ज्ञाने। युज, समाधौ। सृज, विसर्गे। लिश, अल्पीभावे। इत्यनुदात्ता अनुदात्तेतः ॥

अथ गणान्ता एकसप्ततिः परस्मैभाषाः ॥

राधोऽकर्मकाद्वृद्धावेव। व्यध, ताडने। पुष, पुष्टौ। शुष, शोषणे। तुष, प्रीतौ। दुष, वैकृत्ये। (३) श्लिष, आलिङ्गने। शक विभाषितोमर्षणे। ञिष्विदा, गात्रप्रक्षरणे। ष्विदा इति केचित्। क्रुध, क्रोधे। क्षुध, बुभुक्षायाम्। शुध, शौचे। षिधु, संराद्धौ। इत्यनुदात्ता उदात्तेतः। (४) रध, हिंसा संराध्योः। (५) णश, अदर्शने। तृप, प्रीणने। दृप, हर्षणमोहनयोः। अनुदात्तौ। (६) द्रुह, जिघांसायाम्। मुह, वैचित्त्ये। ष्णुह, उद्गिरणे। ष्णिह, प्रीतौ। वृत् रधादयः। (७) शमु, उपशमे। तमु, काङ्क्षायाम्, दमु, उपशमे। श्रमु, तपसि खेदे च। भ्रमु, अनवस्थाने। क्षमू, सहने। क्लमु, ग्लानौ। मदी, हर्षे। इत्यष्टौ शमादयः। (८) असु, क्षेपणे। (९) यसु,

---

(१) नहो धः। ८। २। ३४। (२) चिण्तेपदः। ३। १। ६०। (३) श्लिष आलिङ्गने। ३। १। ४६। (४) रधादिभ्यश्च। ७। २। ४५। (५) मस्जिनशोर्झलि। ७। १। ६०। नशेःषान्तस्य।८।४।३६। (६) वा द्रुहमुहष्णुहष्णिहाम्।८।२।३३। (७) शमामष्टानां दीर्घः श्यनि। ७। ३। ७४। (८) लुङि-अस्यतेस्थुक्। ७। ४। १७। (९) यसोऽनुपसर्गात्। ३। १। ७१। संयसश्च। ३। १। ७२।

---

(१) तितिक्षा-क्षमा। (२) पूतीभावः-क्लेदः (३) समाधिश्चित्तवृत्तिनिरोधः। (४) वैकृत्यं-विकृतिः। (५) गात्रप्रक्षरणं-घर्मस्रुतिः। (६) संराद्धिः-पाकः। (७) मोहनं-गर्वः। (८) वैचित्त्यमविवेकः।

प्रयत्ने । जसु, मोक्षणे । तसु, उपक्षये । दसु, च । वसु, स्तम्भे । व-शादिरित्येके । व्युष, विभागे । ओष्ठ्यादिर्दन्त्यान्तो व्युसइत्यन्ये । अयकारं बुस इत्यपरे । प्लुष, दाहे । बिस, प्रेरणे । कुस, संश्लेषणे । बुस, उत्सर्गे । मुस, खण्डने । मसी, परिणामे । समी इत्येके । लुठ, विलोडने । उच, समवाये । भृशु, भ्रंशु, अधःपतने । वृश, वरणे । कृश, तनूकरणे । ञितृष, पिपासायाम् । हृष तुष्टौ । रुष, रिष, हिंसायाम् । डिप, क्षेपे । कुप, क्रोधे । गुप, व्याकुलत्वे । युपु, रुपु, लुपु, विमोहने । लुभ, गार्ध्ये । क्षुभ, संचलने । णभ, तुभ, हिंसायाम् । क्लिदू, आर्द्रीभावे । (१) ञिमिदा, स्नेहने । ञिक्ष्विदा, स्नेहन-मोचनयोः । ऋधु, वृद्धौ । गृधु, अभिकाङ्क्षायाम् । वृतु । इत्युदात्ता-उदात्तेतः । दिवादिराकृतिगणः ।

इति श्यन्विकरणा दिवादयः ॥

# अथ स्वादिर्गणः ॥

अथ स्वादयो दशोभयतोभाषाः ॥

(२) षुञ्, अभिषवे । षिञ् बन्धने । शिञ्, निशाने । डुमिञ्, प्रक्षेपणे । (३) चिञ्, चयने । (४) स्तृञ्, आच्छादने । कृञ्, हिंसायाम् । (५) वृञ्, वरणे । धुञ्, कम्पने । दीर्घान्तोपीत्येके । इति वृञ्वर्जमनुदात्ताः ।

अथ नव परस्मैभाषाः ॥

टुदु, उपतापे । (६) हि, गतौ वृद्धौ च । पृ, प्रीतौ । स्पृ, प्रीति

(१) मिदेर्गुणः । ७ । ३ । ८२ । (२) स्वादिभ्यः श्नुः ।३।१।७३। सुनोतेः स्यसनोः ।८।३।११७। (३) लिटि—विभाषा चेः ।७।३।५८। (४) ऋतश्च संयोगादेः । ७ । २ । ४३ । (५) लिटि—बभूथाततन्थजगृभ्मववर्थेतिनिगमे । ७ । २ । ६४ । लिङ्सिचोरात्मनेपदेषु । ७ । २ । ४२ । न लिङि । ७ । २ । ३९ । (६) पृणो-त्यादयस्त्रयोऽपिच्छान्दसाः ।

(१) परिणामो-विकारः । (२) गार्ध्यमाकाङ्क्षा । (३) निशानं-तीक्ष्णीकरणम् ।

पालनयोः। प्रीतिचलनयोरित्यन्ये। स्मृ, इत्येके। (१) आप्लृ, व्याप्तौ। शक्लृ, शक्तौ। (२) राध, साध, संसिद्धौ। इत्यनुदात्ताः।

अथ द्वावात्मनेभाषौ ॥

(३) अशू, व्याप्तौ संघाते च। ष्टिघ, आस्कन्दने। इत्युदात्तावनुदात्तेतौ।

अथागणान्तात् षोडश परस्मैभाषाः ॥

तिक, तिग, गतौ च। षघ, हिंसायाम्। ञिधृषा, प्रागल्भ्ये। (४) दम्भु, दम्भने। ऋधु, वृद्धौ। तृप, प्रीणन इत्येके। छन्दसि। अह, व्याप्तौ। दघ, घातने पालने च। चमु, भक्षणे। रि, क्षि, चिरि, जिरि, दाश, दृ, हिंसायाम्। क्षि, भाषायामपि। इत्युदात्ता उदात्तेतः। वृत्।

इति श्नुविकरणाः स्वादयः ॥

# अथतुदादिर्गणः ॥

अथ षडुभयतोभाषाः ॥

(५) तुद, व्यथने। णुद, प्रेरणे। दिश, अतिसर्जने। (६) भ्रस्ज, पाके। क्षिप, प्रेरणे। कृष, विलेखने। इत्यनुदात्ताः स्वरितेतः।

अथैकः परस्मैभाषः ॥

ऋषी, गतौ। उदात्त उदात्तेत्।

(१) हिनुमीना। ८। ४। १५। हेरचङि। ७। ३। ५६। (२) राधोहिंसायाम्। ६। ४। १२३। (३) अश्नोतेश्च। ७। ४। ७२। (४) वा० दम्भेश्च–एत्वाभ्यासलोपौवक्तव्यौ। (५) तुदादिभ्यःशः। ३। १। ७७। (६) भ्रस्जोरोपधयोरमन्यतरस्याम्। ६। ४। ४७।

(१) आस्कन्दनम्–गमनम्। (२) लोकवञ्चनायविहितकर्म्मानुष्ठानंदम्भः (३) अतिसर्जनंदानम्।

अथ चत्वारआत्मनेभाषाः ॥

जुषी, प्रीति सेवनयोः (१)। ओविजी, भय चलनयोः। ओलजी, ओलस्जी, व्रीडायाम्। इत्युदात्ता अनुदात्तेतः।

अथ व्रश्चादयश्चतुर्दशोत्तरशतं परस्मैभाषाः।

ओव्रश्चू, छेदने। व्यच, व्याजीकरणे[1]। उछि, उञ्छे। उछी, विवासे। ऋछ, गतीन्द्रियप्रलयमूर्त्तिभावेषु। मिछ, उत्क्लेशे। जर्ज, चर्च, झर्झ, परिभाषणभर्त्सनयोः। त्वच, संवरणे। ऋच, स्तुतौ। उब्ज, आर्जवे। उज्झ, उत्सर्गे। लुभ, विमोहने। रिफ, कत्थन युद्ध निन्दा हिंसादानेषु। रिह, इत्येके। तृप, (२) तृम्प, तृप्तौ। तृफ, तृम्फ, इत्येके। तुप, तुम्प, तुफ, तुम्फ, हिंसायाम्। दृफ, दृम्फ, उत्क्लेशे। दृफ, इत्यन्ये। ऋफ, हिंसायाम्। गुफ, गुम्फ, ग्रन्थे। उभ, उम्भ, पूरणे। शुभ, शुम्भ, शोभार्थे। दृभी, ग्रन्थे। चृती, हिंसा ग्रन्थनयोः। विध, विधाने। जुड, गतौ। जुन, इत्येके। मृड, सुखने। पृड, च। पृण, प्रीणने। वृण, च। मृड, हिंसायाम्। तुण, कौटिल्ये। पुण, कर्म-णि शुभे। मुण, प्रतिज्ञाने। कुण, शब्दो पकरणयोः। शुन, गतौ। द्रुण, हिंसा गति कौटिल्येषु। घुण, घूर्ण, भ्रमणे। पुर, ऐश्वर्य्य दीप्त्योः। कुर, शब्दे। खुर, छेदने। मुर, संवेष्टने। चुर, विलेखने। घुर, भीमार्थ शब्दयोः। पुर, अग्रगमने। वृहू, उद्यमने। वृहू, इत्येके। तृहू, स्तृहू, तृंहू, हिंसार्थाः। इष, इच्छायाम्। मिष, स्पर्द्धायाम्। किल, श्वैत्य क्रीडनयोः। तिल, स्नेहे। चिल, वसने। चल, विलसने। इल, स्वप्न क्षेपणयोः। विल, संवरणे। बिल, भेदने। णिल, गहने। हिल, भावकरणे। शिल, षिल, उञ्छे। मिल, श्लेषणे। लिख, अक्षरवि-न्यासे। कुट, कौटिल्ये। पुट, संश्लेषणे। कुच, संकोचने। गुज, शब्दे।

(१) विज इट् ।१।२।२। (२) वा०—शेतृम्पादीनां नुम्वाच्यः।

(१) व्याजीकरणम्—कपटकरणम्। (२) उत्क्लेशः—पीडा (३) विमोहनमाकुली-करणम् (४) भावकरणमभिप्रायसूचनम्।

गुड, रक्षायाम् । डिप, क्षेपे (१) कुर, छेदने । स्फुट, विकसने । मुट, आक्षेप मर्दनयोः । त्रुट, छेदने । तुट, कलहकर्मणि । चुट, छुट, छेदने । जुड, बन्धने । कड, मदे । लुट, संश्लेषणे । कृड, घनत्वे[1] । कुड, बाल्ये । पुड, उत्सर्गे । घुट, प्रतिघाते । तुड, तोडने[2] । थुड, स्थुड, संवरणे । खुड, छुड, इत्येके । स्फुर, स्फुल, संचलने । स्फुर, स्फुरणे । (२) स्फुल, संचलन इत्येके । स्फुड, चुड, व्रुड, संवरणे । क्रुड, भृड, निमज्जन इत्येके । इत्युदात्ताः ॥

अथैक आत्मनेभाषः ॥

गुरी, उद्यमने । इत्युदात्तोऽनुदात्तेत् ।

अथ चत्वारः परस्मैभाषाः ॥

णू, स्तवने । धू, विधूनने । गु, पुरीषोत्सर्गे । ध्रु, गति स्थैर्ययोः । ध्रुव, इत्येके । आद्यावुदात्तावन्त्यौचानुदात्तौ ।

अथ द्वावात्मनेभाषौ ॥

कूङ्, शब्दे । कुङ्, इत्येके । इत्युदात्तौ ॥

[ वृत् ] इति कुटादिगणः समाप्तः ॥

अथ द्वावात्मनेभाषौ ॥

पृङ्, व्यायामे । (३) मृङ्, प्राणत्यागे । इत्यनुदात्तौ ॥

अथ सप्त परस्मैभाषाः ॥

रि, पि, गतौ । धि, धारणे । क्षि, निवास गत्योः । इत्यनुदात्ताः। षू, प्रेरणे । (४) कॄ, विक्षेपे (५) गॄ, निगरणे । इत्युदात्ताः ॥

---

(१) नभकुर्छुराम् ।८।२।७९। (२) स्फुरतिस्फुलत्योर्निर्निविभ्यः ।८।३।७६। (३) म्रियतेर्लुङ्लिङोश्च ।१।३।६१। (४) किरतौ लवने ।६।१। १४०। वा०–अडभ्यासव्यवायेऽपि सुट्कात्पूर्वइति वक्तव्यम्। हिंसायां प्रतेश्च ।६। १।१४१। (५) अचि विभाषा ।८।२।२१।

---

(१) घनत्वं–सान्द्रता । (२) तोडनं-भेदः ।

अथ द्वावात्मनेभाषौ ॥

दृङ्, आदरे। धृङ्, अवस्थाने। इत्यनुदात्तौ ॥

अथ षोडश परस्मैभाषाः ॥

प्रच्छ, ज्ञीप्सायाम्[1]। वृत्। किरादयो वृत्ताः ॥

सृज, विसर्गे। (१) टुमस्जो, शुद्धौ। रुजो, भङ्गे। भुजो, कौटिल्ये। छुप, स्पर्शे। रुश, रिश, हिंसायाम्। लिश, गतौ। स्पृश, संस्पर्शने। विच्छ, गतौ। विश, प्रवेशने। मृश, आमर्शने[2]। णुद, प्रेरणे। षद्लृ, विशरणगत्यवसादनेषु। शद्लृ, शातने। इत्यनुदात्ता विच्छिस्तूदात्तः ॥

अथ षडुभयतोभाषाः ॥

मिल, संगमे (२) मुच्लृ, मोचने। लुप्लृ, छेदने। विद्लृ, लाभे। लिप, उपदेहे[3]। षिच, क्षरणे। इत्यनुदात्ताः मिलिस्तूदात्तः ॥

अथ त्रयः परस्मैभाषाः ॥

कृती, छेदने। खिद, परिघातने। पिश, अवयवे। इत्युदात्तौ खिदिस्त्वनुदात्तः। वृत्।

इति शविकरणास्तुदादयः ॥

# अथ रुधादिर्गणः ॥

अथ नवोभयतोभाषाः ॥

(३) रुधिर्, आवरणे। भिदिर्, विदारणे। छिदिर्, द्वैधीकरणे।

---

(१) वा०—मस्जेरन्त्यात्पूर्वो नुम्वाच्यः। (२) शेमुचादीनाम्। ७।१।५९। (३) रुधादिभ्यः श्नम्। ३।१।७८।

---

[१] ज्ञातुमिच्छा—ज्ञीप्सा। अत्रज्ञप्तिर्ज्ञाने। [२] आमर्शनं-स्पर्शः। [३] उपदेहो-वृद्धिः।

रिचिर्, विरेचने । विचिर्, पृथग्भावे । क्षुदिर्, संपेषणे । युजिर्, योगे । उच्छृदिर्, दीप्ति देवनयोः । उतृदिर्, हिंसाऽनादरयोः । इत्यनुदात्ताः । छृदितृदी तूदात्तौ ।

अथैकः परस्मैभाषः ॥

कृती, वेष्टने । इत्युदात्तः ।

अथ त्रयआत्मनेभाषाः ॥

(१) ञिइन्धी, दीप्तौ । उदात्तः ॥

खिद, दैन्ये । विद विचारणे । इत्यनुदात्तौ ।

अथ द्वादश परस्मैभाषाः ॥

शिष्लृ, विशेषणे । पिष्लृ, संचूर्णने । भञ्जो, आमर्दने । भुज, पालनाभ्यवहारयोः[1] । (२) तृह, हिंसि, हिंसायाम् । उन्दी, क्लेदने । (३) अञ्जू, व्यक्ति मर्षणकान्तिगतिषु । तञ्चू, संकोचने । ओविजी, भय चलनयोः । वृजी, वर्जने । पृची, संपर्के । इत्युदात्ताः । आद्या-श्चत्वारस्त्वनुदात्ताः । वृतु ।

इति श्नम्विकरणा रुधादयः॥

# अथ तनादिर्गणः ॥

अथ सप्तोभयतोभाषाः ॥

(४) तनु, विस्तारे । षणु, दाने । क्षणु, हिंसायाम् । क्षिणु, च । ऋणु, गतौ । तृणु, अदने । घृणु, दीप्तौ । इत्युदात्ताः ।

(१) श्नान्नलोपः ।६।४।२३। (२) तृणह इम् ।७।३।९२। (३) लुङि-अञ्जेः सिचि । ७।२।७१। (४ तनादिकृञ्भ्य उः ।३।१।७९। लुङि-तनादिभ्यस्तथासोः ।२।४।७९।

[१] अभ्यवहारो-भक्षणम् । [२] व्यक्तिर्विवेचनम् । म्रक्षणं-स्निग्धता । क्वचित् म्रक्षणेति पाठः ।

अथ द्वावात्मनेभाषौ ॥

वनु, याचने । मनु, अवबोधने । इत्युदात्तौ ।

अथैक उभयतोभाषः ॥

( १ ) डुकृञ्, करणे । अनुदात्तः । घृत् ।

इत्युविकरणास्तनादयः ॥

## अथ क्र्यादिर्गणः ॥

:-०-:

अथ पञ्चदशोभयतोभाषाः ॥

( २ ) डुक्रीञ्, द्रव्यविनिमये । प्रीञ्, तर्पणे कान्तौ च । श्रीञ्, पाके । मीञ्, हिंसायाम् । षिञ्, बन्धने । ( ३ ) स्कुञ्, आप्रवणे । युञ्, बन्धने । इत्यनुदात्ताः ॥

(१) अत उत्सार्वधातुके । ६ । ४ । ११० । नित्यंकरोतेः । ६।४।१०८ । ये च । ६ । ४ । ९ । सम्पर्युपेभ्यः करोतौ भूषणे । ६ । १ । १३७ । समवाये च । ६ । १ । १३८ । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । ६ । १ । १३९ । सुट्कात्पूर्वः । ६ । १ । १३५ । वा०—कृसृभृइतिसूत्रेक्रतोभारद्वाजस्येति सूत्रेकृञोऽसुटइतिवाच्यम् । छन्दसिलुङि—मन्त्रे घसह्वरणशवृदहादूवृच्कृगमिजनिभ्यो लेः। २।४।८०। अभ्युत्सादयांमजनयांचिकयांरमयामकःपावयांक्रियाद्विदामक्रन्निति छन्दसि। ३।१।४२। ( २ ) क्र्यादिभ्यः श्ना ।३।१।८१। ( ३ ) स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यःश्नुश्च । ३ । १ । ८२ । वेःस्कभ्नातेर्नित्यम् । ८ । ३ । ७७ । लोटि—हलःश्नः शानज्झौ । ३ । १ । ८३ । छन्दसि शायजपि । ३ । १ । ८४ ।

( १ ) कान्तिः-कामना ।

क्नूञ्, शब्दे । द्रूञ्, हिंसायाम् । (१)पुञ्, पवने । लुञ्, छेदने । (२) स्तॄञ्, आच्छादने । कॄञ्, हिंसायाम् । वृञ्, वरणे । धूञ्, कम्पने । इत्युदात्ताः ॥

अथ श्रादयो बध्नासन्तास्त्रयोविंशतिः परस्मैभाषाः ॥

शॄ, हिंसायाम् । पॄ, पालन पूरणयोः । वॄ, वरणे । भरण इत्येके । भॄ, भर्त्सने । भरण इत्येके । मॄ, हिंसायाम् । दॄ, विदारणे । जॄ, वयोहानौ । झॄ, इत्येके । धॄ, इत्यन्ये । नॄ, नये । कॄ, हिंसायाम् । ॠ, गतौ । गॄ, शब्दे । इति श्रादय उदात्ताः ।

अथ दश परस्मैभाषाः ॥

(३) ज्या, वयोहानौ । री, गति रेषणयोः । ली, श्लेषणे । व्ली, वरणे । प्ली, गतौ । वृत् । ल्वादयो वृत्ताः । प्वादयोपीत्येके ॥

व्री, वरणे । भ्री, भये । भरइत्येके । (४) क्षीष्, हिंसायाम् । ज्ञा, अवबोधने । बन्ध, बन्धने । इति ज्यादयोऽनुदात्ताः ।

अथैकआत्मनेभाषः ॥

वृङ्, संभक्तौ । इत्युदात्तः ।

अथ पञ्चविंशतिः परस्मैभाषाः ॥

श्रन्थ, विमोचन प्रतिहर्षयोः । मन्थ, विलोडने । श्रन्थ, ग्रन्थ, संदर्भे । कुन्थ, संश्लेषणे । संक्लेश इत्येके । मृद, क्षोदे । मृड, च । मृड, सुखे च । गुध, रोषे । (५) कुष्, निष्कर्षे (६) क्षुभ, सञ्चलने । णभ, तुभ, हिंसायाम् । क्लिशू, विबाधने । अश, भोजने ।

(१) प्वादीनां ह्रस्वः ।७।३।८०। (२) लिङि-न लिङि ।७।२।३९। (३) हलः ।६।४।२। (४) एषां त्रयाणां ह्रस्वः केषांचिन्मते तु न। (५) निरः कुषः । ७ । २ । ४६ । (६) क्षुभ्नादिषु च । ८ । ४ । ३९ ।

(१) रेषणं-वृकशब्द. । (२) ग्रन्थसन्दर्भे इत्येकमेवपदमित्यन्ये ।

उध्रस, उञ्छे । (१) इष, आभीक्ष्ण्ये । विष, विप्रयोगे । प्रुष, प्लुष, स्नेहन-सेवन-पूरणेषु । पुष, पुष्टौ । मुष, स्तेये । खच, भूतप्रादुर्भावे । (२) खव, इत्येके । हेठ, च । इति अन्थादय उदात्ताः ॥

अथैक उभयतोभाषः ॥

(३) ग्रह, उपादाने । इत्युदात्तः । वृत् ॥

इति श्नाविकरणाः क्र्यादयः ॥

———o———

# अथ चुरादिगणः ॥

———:-o-:———

अथ चुरादयष्ण्यन्तास्त्रिपष्ठ्युत्तरमेकशतमुदात्तेतः ॥

(४) चुर, स्तेये । चिति, स्मृत्याम् । यत्रि, सङ्कोचे । स्फुडि, परिहासे । फुटि, इति पाठान्तरम् । लक्ष, दर्शनाङ्कनयोः । कुद्रि, अनृतभाषणे । लड, उपसेवायाम् । मिदि, स्नेहने । ओलडि, उत्क्षेपणे । उकारादिरयमित्यन्ये । जल, अपवारणे । लज, इत्येके । (५) पीड, अवगाहने । नट, अवस्कन्दने । श्रथ, प्रयत्ने । प्रस्थान इत्येके । बध, संयमने । बन्ध, इत्येके । पॄ, पूरणे । ऊर्ज्ज, बल प्राणनयोः । पक्ष,

(१) वा०-इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति । (२) च्छ्वोः शूडनुनासिके च । ६ । ४ । १९ । (३) ग्रहोऽलिटि दीर्घः । ७ । २ । ३७ । (४) सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । ३ ।१।२५। णिचश्च। १ । ३ । ७४ । (५) भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।७।४। ३।

(१) पौनः पुन्यं भृशार्थो वाऽऽभीक्ष्ण्यम् । (२) स्तेयं-चौर्यम् (३) भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । (४) स्नेहपूर्विका सेवा-उपसेवा (५) अवस्कन्दनं नाट्यम् ।

परिग्रहे । वर्ण, चूर्ण, प्रेरणे । वर्ण, वर्णने इत्येके । (१) प्रथ, प्रख्याने (२) पृथ, प्रक्षेपे । पथ, इत्येके । षम्ब, संबन्धने । शम्ब, च । साम्ब, इत्येके । भक्ष, अदने । कुट्ट, छेदन भर्त्सनयोः । पूर्ण इत्येके । पुट्ट, चुट्ट, अल्पीभावे । अट्ट, षुट्ट, अनादरे [ अट्टदोपधः ] । लुण्ठ, स्तेये । शठ, श्वठ, असंस्कारगत्योः । श्वठि, इत्येके । तुजि, पिजि, हिंसा-बलाऽऽदान निकेतनेषु । तुज, पिज, इति केचित् । लजि, लुजि, इत्येके । पिस, गतौ । षान्त्व, सामप्रयोगे । श्वल्क, वल्क, परिभाषणे । ष्णिह, स्नेहने । स्फिट, इत्येके । स्मिट, अनादरे । ष्मिङ्, अनादर इत्येके । श्लिष, श्लेषणे । पथि, गतौ । पिच्छ, कुट्टने । छदि, संवरणे । श्रण, दाने [ प्रायेणायं विपूर्वः ] । तड, आघाते । खड, खडि, कडि, भेदने । कुडि, रक्षणे । गुडि, वेष्टने च । कुठि, गुठि, चेत्यन्ये । खुडि, खण्डने । वटि, विभाजने । वडि, इत्येके । मडि, भूषायाम् । हर्षे च । भडि, कल्याणे । छर्द, वमने । पुस्त, बुस्त, आदरानादरयोः । चुद, संचोदने । नक्क, धक्क, नाशने । चक्क, चुक्क, व्यथने । क्षल, शौचकर्मणि । तल, प्रतिष्ठायाम् । तुल, उन्माने । दुल, उत्क्षेपे । पुल, महत्त्वे । चुल, समुच्छ्राये । मूल, रोहणे । कल, विल, क्षेपे । बिल, भेदने । तिल, स्नेहने । चल, भृतौ । पाल, रक्षणे । लूष, हिंसायाम् । शुल्ब, माने । शूर्प, च । चुट, छेदने । मुट, संचूर्णने । पडि, पसि, नाशने । व्रज, मार्गसंस्कार-गत्योः । शुल्क, अतिस्पर्शने । चपि, गत्याम् । क्षपि, क्षान्त्याम् । छजि, कृच्छ्रजीवने । श्वर्त्त, गत्याम् । श्वभ्र, च । (३) ज्ञप, मिच । यम, च परिवेषणे । चह, परिकल्कने । चप इत्येके । बल, प्राणने । (४) चिञ्, चयने । रह, त्यागे । घट्ट, चलने । मुस्त, संघाते । खट्ट, संवरणे ।

(१) अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् । ७ । ४ । ९५ । (२) उर्ऋत् । ७।४।७ । (३) मितां ह्रस्वः । ६ । ४ । ९२ । (४) चिस्फुरोर्णौ । ६ । १ । ५४ । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ । ७ । ३ । ३६ ।

(१) संचोदनं प्रश्नः प्रेरणाच्च ।

षट्ट, स्फिट्ट, चुबि, हिंसायाम् । पुल, सङ्घाते । पूर्ण, इत्येके । पुण, इत्यन्ये । पुंस, अभिवर्द्धने । टकि, बन्धने । धूस, कान्तिकरणे । धूष, धूश, वेत्यन्ये । कीट, वरणे । चूर्ण, संकोचने । पूज, पूजायाम् । अर्क, स्तवने । तपनइत्येके । शुठ, आलस्ये । शुठि, शोषणे । जुड, प्रेरणे । गज, मार्ज, शब्दार्थौ । मर्च्च, च । पॄ, प्रस्रवणे । स्रावण-इत्येके । पचि, विस्तारवचने । तिज, निशाने । (१) कृत, संशब्दने । वर्द्ध, छेदनपूरणयोः । कुबि आच्छादने । कुभि, इत्येके । लुबि, तुबि, अदर्शने । अर्द्दन इत्यन्ये । ह्लप, व्यक्तायां वाचि । क्लृप, इत्येके । चुटि, छेदने । (२) इल, प्रेरणे । म्लेच्छ, म्लेच्छने । म्लेच्छ, अव्यक्तायां वाचि । ब्रूस, बर्ह, हिंसायाम् । गर्द, गर्ज, शब्दे । गर्ध, अभिकाङ्क्षायाम् । गुर्द, पूर्वनिकेतने । जसि, रक्षणे । ईड, स्तुतौ । जसु, हिंसायाम् । पिडि, संघाते । रुष, रोषे । रुट, इत्येके, । डिप क्षेपे । ष्टुप, समुच्छ्राये ॥ इत्युदात्ता उदात्तेतः ॥

अथ आकुस्माद् द्विचत्वारिंशदात्मनेभाषाः ॥

चित, संचेतने। दशि, दंशने। दसि, दंशन दर्शनयोः। दस, इत्येके। डप, डिप, संघाते । तत्रि, कुटुम्बधारणे । मन्त्रि, गुप्तपरिभाषणे । स्पश, ग्रहण संश्लेषणयोः । तर्ज, भर्त्स, तर्जने । वस्त गन्ध, अर्दने । विष्क, हिंसायाम् । हिष्क, इत्येके । निष्क, परिमाणे । लल, ईप्सायाम् । कूण, संकोचे । तूण, पूरणे । भ्रूण, आशाविशङ्कयोः । शठ, श्लाघायाम् । यक्ष, पूजायाम् । स्यम, वितर्के । गूर, उद्यमने । शम, लक्ष, आलोचने । कुट, छेदने । कुट, इत्येके । कुत्स, अवक्षेपणे । गल, स्रवणे । भल, आभण्डने । कुट, आप्र-

(१) उपधायाश्च । ७ । १ । १०१ । (२) छन्दसि लुङि—नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः । ३ । १ । ५१ ।

(१) म्लेच्छनमपशब्दनम् । (२) केचित् 'पूर्वनिकेतने' इत्येकमेव पद मित्याहुः । (३) आभण्डनं-निरूपणम् ।

दाने । अवसादन इत्येके । कुट्ट, प्रतापने । वञ्चु, प्रलम्भने । वृष, शक्तिबन्धने । मद, तृप्तियोगे । दिवु, परिकूजने । गॄ, विज्ञाने । विद, चेतना-ख्यान-निवासेषु । मान, स्तम्भे । यु, जुगुप्सायाम् । कुस्म, नाम्नोवा ॥ इत्युदात्ता अनुदात्तेतः ।

अथोभयतोभाषाः ॥

चर्च, अध्ययने । बुक्क, भाषणे । शब्द, उपसर्गादाविष्कारे च । (१) कण, निमीलने । जभि, नाशने । पूर्द, क्षरणे । जसु, ताडने । पशु, बन्धने । अम, रोगे । चट, स्फुट, भेदने । घट, संघाते । हन्त्यर्थाश्च । दिवु, मर्दने । अर्ज, प्रतियत्ने । घुषिर्, विशब्दने । आङः-क्रन्द सातत्ये । लस, शिल्पयोगे । तसि, भूष, अलङ्कारे । अर्ह, पूजायाम् । ज्ञा, नियोगे । भज, विश्राणने । शृधु, प्रसहने । यत, निकारो पस्कारयोः । कल, गल, आस्वादने । रघ, इत्येके । रगे, इत्यन्ये । अञ्चु, विशेषणे । लिगि, चित्रीकरणे । मुद, संसर्गे । ग्रस, धारण ग्रहण वारणेषु । उध्रस, उञ्छे । मुच, प्रमोचनमोदनयोः । वस, स्नेह च्छेदा पहरणेषु । चर, संशये । च्यु, हसन सहनयोः । भुवो, अवकल्कने । मिश्रीकरण इत्येके । चिन्तन इत्यन्ये । कृपेश्च ।

आस्वदः सकर्मकात् ॥

ग्रस, ग्रहणे । पुष, धारणे । दल, विदारणे । पट, पुट, लुट, तुजि, मिजि, पिजि, लुजि, भजि, लघि, त्रसि, पिसि, कुसि, दसि, कुशि, घट, घटि, बृहि, बर्ह, बुल्ह, गुप, धूप, विच्छ, चीव, पुथ, (२) लोकृ, लोचृ, णद, कुप, तर्क, वृतु, वृधु, भाषार्थाः । रुट, लजि, आजि, दासि, भ्रासि, रुषि, शीक, नट, पुटि, जि, चि, रघि, लघि, अहि,

(१) वा०— काण्यादीनां वा । (२) नाग्लोपिशास्वृदिताम् । ७।४।२।

(१) शक्तिबन्धनं-प्रजनन सामर्थ्यम् । (२) विशेषणं-व्यावर्तनम् (३) अवकल्कनं-मिश्रीकरणम् (४) दीप्त्यर्थाः ।

रहि, महि, च। लडि, तड, नल, च। पूरी, आप्यायने। रुज, हिंसायाम्। ष्वद, आस्वादने। स्वाद, इत्येके।

आधृषाद्वा ॥

युज, पृच, संयमने। अर्च, पूजायाम्। षह, मर्षणे। ईर, क्षेपे। ली, द्रवीकरणे। वृजी, वर्जने। वृञ्, आवरणे। जॄ, वयोहानौ। ज्रि, रिच, वियोजन संपर्चनयोः। शिष, असर्वोपयोगे। तप, दाहे। तृप, तृप्तौ। छृदी, सन्दीपने। चृप, छृप, दृप, सन्दीपने। दृभी, भये। दृभ, सन्दर्भे। छद, संवरणे। श्रथ, मोक्षणे। मी, गतौ। ग्रन्थ, बन्धने। क्रथ, हिंसायाम्। स्वरितेदित्येके। शीक, आमर्षणे। चीक, च। अर्द, हिंसायाम्। अर्ह, पूजायाम्। आङः षद, पद्यर्थे[1]। शुन्ध, शौचकर्मणि। छद, अपवारणे। स्वरितेत्। जुष, परितर्कणे[2] (१) धूञ्, कम्पने। प्रीञ्, तर्पणे। श्रन्थ, ग्रन्थ, सन्दर्भे। आप्लृ, लम्भने। तनु, श्रद्धोपकरणयोः। उपसर्गाच्चादैर्घ्ये। वद, सन्देशवचने। स्वरितेत्। वच, परिभाषणे। मान, पूजायाम्। भू, प्राप्तावात्मनेपदी। गर्ह, विनिन्दने। मार्ग, अन्वेषणे। कठि, शोके। मृजू, शौचालंकरणयोः। मृष, तितिक्षायाम्। स्वरितेत्। धृष, प्रसहने। इत्याधृषीयाः।

अथादन्ताः ॥

कथ, वाक्यप्रबन्धे। वर, ईप्सायाम्। (२) गण, संख्याने। शठ, श्वठ, सम्यगवभाषणे। पट, वट, ग्रन्थे। रह, त्यागे। रङ्ग, गतौ। स्तन, गदी, देवशब्दे। पत, गतौ। पष, अनुपसर्गात्। स्वर, आक्षेपे। रच, प्रतियत्ने। कल, गतौ संख्याने च। चह, परिकल्कने[3]। मह, पूजायाम्। सार, कृप, श्रथ, दौर्बल्ये। स्पृह, ईप्सायाम्। भाम, क्रोधे। सूच, पैशुन्ये। खेट, भक्षणे। खोट, इत्येके। क्षोट, क्षेपे।

(१) वा०-धूञ्प्रीञोर्नुग्वक्तव्यः। केचित्तुधून्मीणोरिति पठित्वा मीणातिसाहचर्यात् धुनातेरेव नुकमाहुः। (२) ई च गणः। ७। ४। ९७।

(१) पद्यर्थो-गतिः (२) परितर्कणमूहो हिंसा वा (३) परिकल्कनं-दम्भः।

गोम, उपलेपने । कुमार, क्रीडायाम् । शील, उपधारणे । साम, सान्त्वप्रयोगे । वेल, कालोपदेशे । काल, च । पल्पूल,लवनपवनयोः। वात, सुखसेवनयोः । गवेष, मार्गणे । वास, उपसेवायाम् । निवास, आच्छादने । भाज, पृथक्कर्मणि । सभाज, प्रीति दर्शनयोः । ऊन, परिहाणे । ध्वन, शब्दे । कूट, परितापे । कूट, परिदाह इत्येके। संकेत, ग्राम, कुण, गुण, चामन्त्रणे । कूण, संकोचने । स्तेन, चौर्ये ॥

आगर्वादात्मनेभाषाः ॥

पद, गतौ । गृह, ग्रहणे । मृग, अन्वेषणे । कुह, विस्मापने । शूर, वीर, विक्रान्तौ । स्थूल, परिबृंहणे । अर्थ, उपयाच्ञायाम् । सत्र, सन्तानक्रियायाम् । गर्व, माने । इत्यागर्वीयाः । सूत्र, वेष्टने। विमोचन इत्यन्ये । मूत्र, प्रस्रवणे । रूक्ष, पारुष्ये । पार, तीर, कर्मसमाप्तौ । पुट, संसर्गे । धेक, दर्शनइत्येके । कत्र, शैथिल्ये । कर्तत्यप्येके । प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । तत्करोतितदाचष्टे। तेनातिक्रामति । ( १ ) धातुरूपं च ॥ कर्त्तृकरणाद्धात्वर्थे ।

वष्कदर्शने । चित्र, चित्रीकरणे । कदाचिद्दर्शने । अंस, समाघाते । वट, विभाजने । वटि, लजि, इत्येके । लज, प्रकाशे । मिश्र, सम्पर्के । सङ्ग्राम, युद्धे । अयमनुदात्तेत् । स्तोम, श्लाघायाम् । छिद्र, कर्णभेदने । अन्ध, दृष्ट्युपघाते । उपसंहार इत्यन्ये । दण्ड, दण्डनिपातने । अङ्क, पदे लक्षणे च । अङ्ग, च । सुख, दुःख, तत्क्रियायाम् । रस, आस्वादनस्नेहनयोः । व्यय, वित्तसमुत्सर्गे । रूप, रूपक्रियायाम् । छेद, द्वैधीकरणे । छद, अपवारणे । लाभ, प्रेरणे । व्रण, गात्रविचूर्णने । वर्ण, वर्णक्रिया–विस्तार–गुणवचनेषु ।

---

( १ ) वा०–आख्यानात्कृतस्तदाचष्ट कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति ॥

---

( १ ) उपधारणमभ्यासः। ( २ ) पल्पूलनं-शोधनद्रव्यम् । (३) करणभेदने इत्यन्ये पेठुः। कर्णेति पृथग्धातुरित्यन्ये । ( ४ ) वर्णक्रिया-वर्णकरणम् ।

बहुलमेतान्निदर्शनम् । पर्ण, हरितभावे । एवमन्येऽपिधातवः । शिङ्घाणिरसने । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेत-कलोपश्च । पुच्छादिषु धात्वर्थ इत्येव सिद्धम् ॥

इति चुरादयः ॥

# अथ कण्ड्वादयः ॥

(१) कण्डूञ्, गात्रविघर्षणे । मन्तु, अपराधे । वल्गु, पूजामाधुर्ययोः । असु, उपतापे । असू, असूञ् इत्येके । लेट्, लोट्, धौर्त्ये पूर्वभावे स्वप्ने च । लेला, दीप्तौ । इरस्, इरज्, ईरस्, ईर्ष्यायाम् । उषस्, प्रभातभावे । वेद, धौर्त्ये स्वप्ने च । मेधा, आशुग्रहणे । कुषुभ, क्षेपे । मगध, परिवेष्टने । नीचदास्य इत्यन्ये । तन्तस्, पम्पस्, दुःखे । सुख, दुःख, तत्क्रियायाम् । सपर, पूजायाम्, । अरर, आराकर्मणि । भिषज्, चिकित्सायाम् । भिष्णज्, उपसेवायाम् । इषुध, शरधारणे । चरण, वरण, गतौ । चुरण, चौर्ये । तुरण, त्वरायाम् । भुरण, धारणपोषणयोः । गद्गद, वाक्स्खलने । एला, केला, खेला, विलासे । वेला, शेला, इला, इत्यन्ये । खेला, स्खलने च । अदन्तोऽयमित्येके । लिट, अल्पकुत्सनयोः । लाट्, जीवने । हृणीङ्, रोषणे लज्जायाञ्च । महीङ्, पूजायाम् । रेखा, श्लाघासादनयोः । दुवस्, परिताप परिचरणयोः। तिरस्, अन्तर्द्धौ । अगद, नीरोगत्वे । उरस, बलार्थः। तरण, गतौ। पयस्, प्रसृतौ । संभूयस्, प्रभूतभावे । अम्बर, संवर, संभरणे । आकृतिगणोऽयम् ॥

# इति धातुपाठे कण्ड्वादिगणः समाप्तः ॥

(१) कण्ड्वादिभ्योयक् ॥ ३ । १ । २७ ।

# * धातुपाठस्थधातूनामकारादिवर्णक्रमः *

| धा० | पृ० | धा० | पृ० | धा० | पृ० | धा० | पृ० |
|---|---|---|---|---|---|---|---|
| अक | १४ | अण | २७ | अर्ब | ११ | इक् | २२ |
| अकि | ५ | अत | ४ | अर्व | १ | इख | ५ |
| अक्षू | १२ | अति | ४ | अर्ह | १३ | इखि | ५ |
| अग | १४ | अद | २० | अर्ह | ४० | इगि | ५ |
| अगद | ४२ | अदि | ४ | अर्ह | ३१ | इङ् | २२ |
| अगि | ५ | अन | २३ | अल | १० | इट | ७ |
| अघि | ५ | अन | २७ | अव | ११ | इण् | २२ |
| अङ्क | ४१ | अन्ध | ४१ | अश | ३५ | इदि | ५ |
| अङ्ग | ४१ | अवि | ८ | अशू | २१ | इन्धी | ३३ |
| अचि | १५ | अभ्र | ११ | अष | १६ | इरज् | ४२ |
| अचु | १५ | अभि | ८ | अस | १६ | इरस् | ४२ |
| अज | ६ | अम | १० | अस | २२ | इल | ३० |
| अजि | ३१ | अम | ३१ | अंस | ४१ | इल | ३८ |
| अञ्चु | ६ | अम्बर | ४२ | असु | २७ | इला | ४२ |
| अञ्चु | १५ | अय | १० | असु | ४२ | इवि | ११ |
| अञ्चु | ३१ | अर्क | ३८ | असू | ४२ | इष | ३६ |
| अञ्जू | ३३ | अर्घ | ६ | असूञ् | ४२ | इष | २६ |
| अट | ७ | अर्च | ४४ | अह | २९ | इषुध | ४२ |
| अट्ट | ७ | अर्ज | ६ | अहि | १२ | इष | ३० |
| अट्ट | ३७ | अर्ज | ३१ | अहि | ३१ | ईक्ष | ११ |
| अठि | ७ | अर्थ | ४१ | आछि | ६ | ईख | ५ |
| अड्ड | ८ | अर्द | ४ | आप्लृ | २१ | ईङ् | २६ |
| अड | ८ | अर्द | ४० | आप्लृ | ४० | ईज | ६ |
| अण | १ | अरर | ४२ | आस | २० | ईरज् | ४२ |

| धा० | पृ० | धा० | पृ० | धा० | पृ० | धा० | पृ० |
|---|---|---|---|---|---|---|---|
| बल | १५ | भज | २१ | भुवः | ३९ | भ्रेजृ | ६ |
| बल | ३७ | भजि | २१ | भू | १ | भ्रेषृ | १६ |
| बल्भ | ८ | भञ्जो | ३२ | भू | ४० | भ्रेषृ | १६ |
| बल्ह | १२ | भट | १३ | भूष | १२ | मकि | ५ |
| बहि | १२ | भडि | ७ | भूष | ३१ | मक्कि | ५ |
| बाडृ | ७ | भडि | ३७ | भृजी | ६ | मख | ५ |
| बाधृ | ३ | भण | १ | भृञ् | १६ | मखि | ५ |
| बाहृ | १२ | भदि | ३ | भृञ् | २४ | मगध | ४२ |
| बिट | ७ | भर्त्सँ | १८ | भृट | ७ | मगि | ५ |
| बिदि | ५ | भर्वँ | ११ | भृड | ३१ | मघि | ५ |
| बिल | ३० | भल | १० | भृशु | २८ | मघि | ५ |
| बिस | ३० | भल | ३८ | भृशि | ३१ | मघि | ५ |
| बुक्क | ५ | भल्ल | १० | भॄ | ३५ | मच | ६ |
| बुक्क | ११ | भष | १२ | भेषृ | १६ | मचि | ६ |
| बुध | १५ | भस | २५ | भ्यस | १२ | मठ | ८ |
| बुध | २७ | भा | २२ | भ्रण | १ | मठि | ७ |
| बुधिर् | १६ | भाज | ४१ | भ्रमु | १५ | मडि | ७ |
| बुन्दिर् | १६ | भाम | १ | भ्रमु | २७ | मडि | ८ |
| बुस | २८ | भाम | ४० | भ्रंशु | १३ | मडि | ३७ |
| बृह | १३ | भाष | ११ | भ्रंशु | २८ | मण | १ |
| बृहि | १३ | भासृ | १२ | भ्रंसु | १३ | मत्रि | ३८ |
| बृहि | १३ | भिक्ष | ११ | भ्रस्ज | २१ | मथि | ४ |
| बृहि | ३१ | भिदि | ५ | भ्रक्ष | १६ | मथे | १५ |
| बृहिर् | १३ | भिदिर् | ३२ | भ्लक्ष | १६ | मद् | ३१ |
| बृहू | ३० | भिषज् | ४२ | भ्राजृ | ६ | मदि | ३ |
| ब्ली | ३५ | भिष्ण्ज् | ४२ | भ्राजृ | १४ | मदी | १४ |
| ब्रूञ् | २१ | भी | २४ | भ्राशृ | १४ | मदी | २५ |
| भक्ष | ३७ | भुज | ३३ | भ्लाशृ | १४ | मन | २७ |
| भक्ष | १६ | भुजो | ३२ | भ्री | ३५ | मनु | ३६ |
| भज | १८ | भुरण | ४२ | भ्रूण | ३८ | मन्तु | ४२ |








❦ इति ❦

# सूचना ।

विदित हो कि हमारे यहाँ संस्कृत, अंग्रेज़ी और हिन्दी की छपाई का काम अति शुद्धतापूर्वक होता है । इस के अतिरिक्त बेल, बूँटे, स्टीरियो, ब्लाक आदि अनेक प्रकार के सुन्दर सामान, बम्बई, और कलकत्ते से मँगाये गये हैं । जाब, टेबिल और फेन्सी का काम बहुत अच्छा होता है । और अन्य प्रेसों की अपेक्षा छपाई भी कम लीजाती है । कृपया एक वार परीक्षा कर देखिये ।

## प्राप्तव्य-संस्कृतपुस्तक

| | | |
|---|---|---|
| अष्टाध्याय्याः पूर्वार्द्धम् ( सवृत्तिकम् ) .... .... | मू० | २) |
| योगदर्शनम् ( आर्यभाषासहित भोजवृत्तियुतम् ) | ,, | १॥) |
| काव्यलतिका .... .... .... .... | ,, | ॥।) |
| आर्यसूक्तिसुधा .... .... .... .... | ,, | ।) |
| अष्टाध्यायी ( मूलम् ) .... .... .... | ,, | ।) |
| नामिकः .... .... .... .... | ,, | =)॥ |
| सन्धिविषयः .... .... .... .... | ,, | =) |
| संस्कृताङ्कुरः .... .... .... .... | ,, | =) |
| प्रथमपुस्तकम् .... .... .... .... | ,, | -) |

 पताः— प्रबन्धकर्त्ता,

सद्धर्म-प्रचारक यन्त्रालय-

जालन्धर शहर ।

अथवा-गुरुकुल हरद्वार, मुख्याधिष्ठाता ।